


KÂVYAMÂLÂ 90.

THE

# YÂTRÂ PRABANDHA

OF

# SAMARAPUNGAVA DÎKSHITA

EDITED BY

PAṆDITA KEDÂRANÂTHA

SON OF

MAHÂMAHOPÂDHYÂYA PAṆDITA DURGÂPRASÂDA

AND

WÂSUDEVA LAXMAṆA SHÂSTRÎ PAṆASHÎKAR.



PRINTED AND PUBLISHED

BY

TUKÂRÂM JÂVAJÎ,

PROPRIETOR OF JÂVAJÎ DÂDÂJÎ'S "NIRṆAYA-SÂGARA" PRESS.

BOMBAY.

1908.

*Price* 1 *Rupee.*

काव्यमाला ९०.

समरपुंगवदीक्षितविरचितो

# यात्राप्रबन्धः ।

जयपुरमहाराजाश्रितेन महामहोपाध्यायपण्डितश्रीदुर्गाप्रसाद-
तनयेन पण्डितकेदारनाथेन, मुम्बापुरवासिना पणशी-
करोपाह्वलक्ष्मणतनुजनुषा वासुदेवशर्मणा च
संशोधितः ।

स च

मुम्बय्यां निर्णयसागराख्ययन्त्रालये तदधिपतिना मुद्राक्षरैरङ्कयित्वा
प्राकाश्यं नीतः ।

१९०८



मूल्यमेको १ रूप्यकः ।

# समरपुंगवदीक्षितः, तदीयो यात्राप्रबन्धश्च।

अतिरात्रयज्वा वाधूलकुलजलधिकौस्तुभः कनकाठपाठविरुदाङ्कः श्रीसमरपुंगवदीक्षितनामायं कविः षोडश्याः ख्रिस्तशताब्द्या ( १५७४ ख्रिस्ताब्दात् परम् ) अन्ते दक्षिणदेशे वटवनाभिधाननाम्नि नगरे श्रीवेङ्कटेशादनन्तम्मायां जन्म लेभे इति तदीये यात्राप्रबन्धे लिखितया ग्रन्थनायकजननकालिकया ग्रहस्थित्या, द्वितीयाश्वासे 'सौभागिनेयः स तदा शोभायै श्रुतिसंपदाम्। अशेवत शिवाकल्पकल्पमप्पय्यदीक्षितम्॥' इत्यादिना कृतेन तदात्व एव वर्तमानस्य सुप्रसिद्धस्य विद्वद्वरेण्यस्य श्रीरङ्गराजाध्वरेस्तनूद्भवस्य चित्रमीमांसाद्यनेकनिबन्धरचयितुः श्रीमदप्पयदीक्षितस्य वर्णनेन च सुस्पष्टमभ्युपगम्यते।

सा ग्रहस्थितिर्यथा—

'अथाध्युषितकेसरिण्यहिमभासि मेषं गते
कलायति तुलाधरोदयमुपेयुषि स्वामिनि।
स्वतुङ्गजुषि वाक्पतौ मकरभाजि मित्रात्मजे
शुभैकजनने दिने सुतमसूत शातोदरी॥
सिंहिकातनुभुवा सह योगः सांप्रतं मृगपतेरजनीति।
स्पर्धमान इव पुत्रमुदारं प्रत्यपद्यत स पूरुषसिंहः॥' इति।

श्रीमदप्पयदीक्षितस्य समुद्भवसमयस्तु संस्कृतचन्द्रिकायाः षष्ठे खण्डे तदीयजीवनचरितोपन्यासेऽस्मत्प्रियसुहृत्प्रवरैः श्रीमद्भिर्विद्यावाचस्पतिभिः श्रीमदप्पाशास्त्रिभिर्विद्वद्भिः प्रमाणैः श्रीमद्दीक्षितवंशोद्भवैः श्रीवैद्यनाथशास्त्रिभिः प्रेषितैस्तत्स्थितिसूचकश्लोकैश्च १५५४ ख्रिस्ताब्दो निर्णीत एव। उपरितना ग्रहस्थितिरप्पयदीक्षितजन्मनो विंशतेर्वर्षेभ्यः परमासीदिति नातिरोहितं ग्रहस्थितिविदाम्। एतावता पर्यवसितं यत्किल कविरयं १५७४ ख्रिस्ताब्दात्परं बभूवेति।

कवेरस्य अनन्ताम्बा श्रीवेङ्कटेशश्च पितरौ। द्राविडजातीय एवायं भवेदिति तदीयविरुदावल्या तन्नाम्ना चानुगीयते।

ग्रन्थोऽयं समरपुंगवदीक्षितेन स्वस्य ज्येष्ठभ्रातुस्तीर्थयात्रामधिकृत्य विरचित इति दक्षिणेषु तीर्थयात्राप्रबन्धनाम्नाप्यस्य प्रसिद्धिः।

ग्रन्थस्यास्य पुस्तकमेकमध्यर्धसप्तमाश्वासपर्यन्तं स्वर्गवासिभिः श्रीकाशीनाथपरबमहोदयैः प्रेषितम्। अध्यर्धसप्तमाश्वासात् समाप्तिपर्यन्तं मद्रपुरस्थराजकीयपुस्तकालयात् श्रीमतां रायबहादुरपदविभूषितानां श्रीरङ्गाचार्यमहोदयानामनुज्ञया श्रीवरदाचार्यमहोदयैः प्रेषितमिति तयोः कृतज्ञाः स्मः। शेमुषीदोषादक्षरयोजकदोषाद्वा यदत्र स्खलितं साक्षरक्षाम्यं श्रीमद्भिरिति शम्।

केदारनाथवासुदेवशर्माणौ
काव्यमालासंपादकौ।

# यात्राप्रबन्धस्य विषयक्रमः

## सप्तम आश्वासे (पृ. १०६—१२३ पृ.)



## अष्टम आश्वासे (१२३—१४० पृ.)



## नवम आश्वासे (पृ. १४०—१५१ पृ.)

# काव्यमाला।



श्रीसमरपुंगवदीक्षितविरचितो

## यात्राप्रबन्धः।

प्रथम आश्वासः।

श्रियं स पुष्णातु वृषध्वजो मे जिगीषतो यस्य पुरानुपूर्वीम्।
चक्रीभवत्क्ष्माधरचापसङ्गी बाणोऽपि चक्री भवति स जैत्रः॥ १॥

पौलोम्यर्पितपादुका चरणयोः पाणिस्फुरद्वेत्रया
भारत्या पुरतो निवारितजना पद्माकरालम्बिनी।
प्रक्रान्तस्तुतिरद्रिराजतनया प्राचीनवाचां गणै-
रायान्ती पतिमन्दिरं निजगृहादन्तर्मम द्योतताम्॥ २॥

यागस्तनवलदाननमन्यकुचादानतरलहस्ताग्रम्।
आत्मजमवलोकयतोः शिवयोरेकः स्मिताङ्कुरो जयति॥ ३॥

विरलीभवद्विलोकनतरलीकृतगोपभीरुचैतन्यम्।
करलीलया मुखार्पितमुरलीवादनपरं महः सेवे॥ ४॥

आनन्दायास्तु कालिन्दी पुरः स्वान्ते सरस्वती।
निह्नुतां जह्नुतनया रंहसा राशिमंहसाम्॥ ५॥

काञ्चीमुखानि परमावधिकाशिकानि
पुण्यस्थलानि कतिचित्क्षितिभूषणानि।
चारूणि योजयितुमग्रजसत्कथायां
कुर्वे मतिं गुणततानिव मौक्तिकानि॥ ६॥

देशिकस्य कृपया हि देहिनामापतन्ति पुरुषार्थसंपदः।
तत्कथारसनिमज्जनं विना मत्कृतेरनघता कथं भवेत्॥ ७॥

कल्याणनिधिमाचार्यकटाक्षं किमिति स्तुमः ।
ईश्वराणां प्रसादोऽपि यस्यावसरमीक्षते ॥ ८ ॥

कालिदासकविमुख्यभारतीपारणाकृतिन एव पण्डिताः ।
भाषिते मम भजेयुरादरं स्वादुसेविन इवाम्लवस्तुनि ॥ ९ ॥

फाणिताञ्चितपयःसहोदरे गद्यपद्यमयकाव्यगुम्फने ।
चापलं किमपि मे रसज्ञया स्वानुरूपमनयानुभूयते ॥ १० ॥

पद्येषु बाहुल्यमिह प्रबन्धे मितानि गद्यानि तु तावतापि ।
अस्त्येव लक्ष्मानुगमो रसज्ञैर्विच्छित्तिभेदाः परमीक्षणीयाः ॥ ११ ॥

महाकविसरस्वती मधुरकाव्यनिर्वर्तने
प्रसन्नपदलिप्सया परमुखानि नापेक्षते ।
अलंकृतिविधौ मणेरधिगमाय किं गाहते
भुवं त्रिदशधाम वा भुजगराजसीमन्तिनी ॥ १२ ॥

अस्ति समस्तविश्वण्डरञ्जनोच्चण्डताण्डवोदञ्चितचरणकंजनखमयूखशशाङ्कोदयसंकोचितभद्रकालीमुखनालीकस्य भ्रमणाटोपपर्यस्तजटाजूटगभस्तिझाटघटनाम्रेडिततडित्पुञ्जपिञ्जरिम्णो डामरडमरुडात्कारमतिरवपूरितामरालयस्य भ्रमरालकानुरागस्मरापाङ्गभृङ्गास्वादितवदनारविन्दसौन्दर्यमकरन्दस्य चिरंतननर्तकशिखामणेरानर्तकभूमिरभूमिरापदामनेकलोकाशयविभक्तरागाभिनिवेशविलासिनीकुचपीठमर्दकपीठमर्दकविटविदूषकजनावटवनाभिधाना राजधानी ।

यस्यां वचःस्वादिमभिक्षुरिक्षुर्यानप्रशंसाकृत एव हंसाः ।
चन्दी मुखसेन्दुरणूदरीणामिन्दीवरश्रीर्नयनांशुनन्दी ॥ १३ ॥

तत्र जयति विचित्रतरचरित्रातिशयसपत्नीकृतत्रिमुखतपोधनानुभावः स्वभावप्रिमग्नपत्नीपादर्शदर्शनीयपद्ददर्शनीरहस्यः अकुसकृतरादेशभयशोदेशिकान्तेवसदरविन्देशसुतमन्दारजलदचिन्तामणिः शैवागमजैवातृकोदयशैवालिनीपतिर्निष्ठिताचारप्रतिष्ठापनगरिष्ठापदानो मन्मथविजयकर्मण्यपर इव पिनाकी धर्मशिवयोगी ।

व्यत्यासं व्याससूनोर्विनिमयममराचार्यवर्यस्य वीप्सां
पाराशर्यस्य मैत्रावरुणिगुणनिकां धर्मसूनोर्विभाषाम् ।
प्रत्यादेशं दधीचेः सनकपरिणतिं नामभेदं मृकण्डो-
स्तण्डोः पर्यायमत्रेर्यमकमिह सुधीधुर्यमाहुर्यमार्याः ॥ १४ ॥

कलानिधेरस्य विधोरिव श्रीः कापि स्वसा काञ्चनपेशलाङ्गी ।
श्रीवेङ्कटेशव्यपदेशभाजो वरस्य जाया हृदयंगमासीत् ॥ १५ ॥

अस्याः किल रमणीमणेरपरगृहिणीसमाजदुरवापा गुणकलापास्तरुणिमारम्भ एव जजृम्भिरे ।

तस्याश्चङ्क्रमणे विलम्बनमभूत्रन्या न दीनावने
तारल्यं दृशि नेन्द्रियेषु तनुता मध्ये न नित्योत्सवे ।
वामत्वं भ्रुवि न प्रियानुसरणव्यापारलीलाविधौ
काठिन्यं च कुचे न चेतसि कचे नाभापणे वक्रिमा ॥ १६ ॥

एनां भरद्वाजकुलैकभूपामनन्तमाख्यामधिगम्य योषाम् ।
वाधूलवंशप्रभवोऽनुरूपां सुधीमणिः सोऽयमवाप शोभाम् ॥ १७ ॥

निरतिशयानुकूल्यनिष्ठागरिष्ठयोररुन्धतीवसिष्ठयोरिव परस्परानुभूतिसुभगभावबन्धमेदुरमनुपलम्भसरणिगोचरविमलम्भरसोदयमलघुविस्रम्भभरनिवारितरहस्यार्थनिगूहनमनिवेदितोपपादितहिताहितविधिप्रतिकारमखिलगृहमेधिपरिषदनुकरणीयसांगत्यमनयोरजायतानुकूलदांपत्यम् ।

नारीललामश्चरितैरुदारैर्दूरीकृतस्वर्गसुखाभिलाषः ।
प्रशाधिभूरेष पिनाकपाणेराज्ञा धिया कर्म समाचचार ॥ १८ ॥

एष पुनरशेषधर्माचरणकर्मणि शाचिव्यमाचरन्त्या नितान्तमसितेक्षणया प्रतिक्षणमापादितमनःसभाजनः सदनवर्तनमेव सकलपुरुषार्थमवधारयन्कदापि न ग्रामणीप्रभृतिसेवासु मानसमबध्नात् ।

सेयमविमुक्तरूपा श्रीपर्वतनिर्विशेषवक्षोजा ।
पुष्करमुखी न कस्मै बभूव कान्तस्य कामनासिद्ध्यै ॥ १९ ॥

तस्य च सुमेधसः प्रबोधतरङ्गिणीपतिकुरङ्गलाञ्छने वाञ्छितवरप्रदानसंतानशाखिनि मन्दाकिनीतरङ्गमालतीदामशेखरे सागरमेखलाश-

ताङ्गसंचारकारिणि वारिधरमेचकांशुवासव्यकन्धरे सिन्धुर-
र्व्यूढचेलकर्मणि सहधर्मिणीविवर्तभेदशरीरार्धमनोहरे चन्द्रक-
चरितसोमशालिनि केलीविटावलेपनिर्वापणनिरीक्षणे सरि...
वरीयसि महसि गरीयसी भक्तिरभूत् ।

वेधःशौरी मुकुटचरणौ वीक्षितुं यस्य नालं
प्राप्तो युद्धे यदुपकरणीभावमेव प्रपञ्चः ।
यस्मिन्विश्वाधिक इति पदं याति विश्रान्तिमुद्रां
कण्ठेकालः स खलु भुवने कस्य न स्यादुपास्यः ॥ २० ॥

मानं यस्य निवेदिताक्षिकमलो माहानुभाव्ये पुमा-
न्दातृत्वे वपुरर्धलाभमुखिता दाक्षायणी साक्षिणी ।
त्रातो दण्डधरान्मृकण्डुतनुभूर्द्रष्टा दयागौरवे
सेव्यश्चन्द्रशिखामणिः स हि कृतश्रेयोभिलाषैर्जनैः ॥ २१ ॥

संप्रदायसुगमं निगमानां तं प्रपद्य तरुणेन्दुकिरीटम् ।
देवतान्तरगिरापि दरिद्रां भावयन्स जगती प्रजहर्ष ॥ २२ ॥

तस्य च सदनान्तरे हृदन्तरालविहरदीशानमुकुटभूषामणीकृतसोदर्य
प्रीतिपरवशेव सरसिजालया चिरमुवास । कुमारिकावलोकनकुतूहलसमा
गतः कलशतरङ्गिणीपतिरिव तदीयशृङ्गिणीनां परिणाहमेदुरेषु परमूधः
प्रकरेषु विरेजे पयोतिरेकः । तस्य तपस्विजनभागधेयस्य दयाविधेयमतेर-
धिनिकेतनमत्यादरोपनीतमभिजातगुणकरम्बितव्यञ्जनपरम्पराञ्चितमतिबहु-
लहैयंगवीनधारानुषङ्गसुरभिलं करनखंपचस्पर्शकमनीयभावसंभृतमसृतरसा-
तिशायिमाधुरीविशेषसंपन्नमनैपमस्त्यशाल्यमवनीमरुभुजो बुभुजिरे ।

भूसुरेषु गृहे तस्य भुञ्जानेषु न केवलम् ।
असंख्यानमभूत्तेषामवस्थानदिनेष्वपि ॥ २३ ॥

महीसुरातिथ्यमहोत्सवेषु समेधमाने श्रमगौरवेऽपि ।
प्रभातपद्मप्रतिमं प्रियाया मुखं स पश्यन्मुमुदे मनीषी ॥ २४ ॥

क्रतुभिरिहान्नदानविभवैरपि कन्दलितै-
रनुदिवसोऽवक्लृप्तविबुधावलितृप्तिविधैः ।

न खलु निकाममस्य हुतशेषमभूदमृतं
विषसपदाभिधेयमपि भोजनशेषमहो ॥ २५ ॥
उपासनामुक्तिरकृत्रिमेव प्रसूय कांचित्प्रथमं कुमारीम् ।
पुत्रोदये प्रत्ययजन्मनीव कुटुम्बिनी तस्य विलम्बते स्म ॥ २६ ॥

अथ कदाचिदपरिणतमणिसमूहामिव रोहणमहीधरतटीम्, अजनितपटीरसालामिव मलयशैलमेखलाम्, अपरिस्फुरुचिरपल्लवामिव सुरविपिनवल्लरीम्, अनङ्कुरितपतङ्गकिरणजालामिव प्रभातवेलाम्, अनधिगतकनकारविन्दामिव मन्दाकिनीम्, अनासादितसुधांशुबिम्बामिव जम्भारिककुभम्, अनवक्लृप्तभाव्यनिर्वर्तनामिव यजनभावनाम्, अविभातव्यङ्ग्यामिव काव्यमञ्जरीम्, अघटितसुखप्रकाशामिव ब्रह्मविद्याम्, अनासादितसमीरसारथिमिव वितानवेदिम्, अनुपनततनयजननामसितनयनामवेक्ष्य हृदयसरणिधूतव्यथः परिणीरिदमभाणीत् ।

आह्लादावहमञ्जनं नयनयोरङ्गे सुधालेपनं
धैर्यं चेतसि खेदनामनि गदे तत्तादृशं भेषजम् ।
क्रीडापोतमिह प्रसूतिजलधौ गेहे प्रकाशोदयं
पुण्यैरायतलोचने परिणतैः पुत्रं लभन्ते जनाः ॥ २७ ॥
उरोरुहादुद्गमितैः पयोभिरापूर्य केल्या निजमास्यगर्भम् ।
फूत्कृत्य मातुर्वदने हसन्तं तनूभवं पश्यति कोऽपि धन्यः ॥ २८ ॥
सप्तद्वीपवसुंधराधिपतिना संक्रन्दनेनाथवा
पाथोजातभवेन कैटभजिता पश्यशिरालेन वा ।
पुंसा केनचिदन्तरेण भुवने पुत्राभिधानं धनं
शक्या किं द्रविणान्तरैर्निरसितुं सा संपदि न्यूनता ॥ २९ ॥

किं बहुना ।

षाड्गुल्यवाचंयमशैलवर्यात्संभूय संतानलता प्रवृद्धा ।
नवाङ्कुरोद्भेदविलम्बिनीयं न सांप्रतं मे हृदयं धिनोति ॥ ३० ॥
श्रीसनाथमपि मे निकेतनं बालकेन रहितं न भासते ।
कंसशासनभुजान्तरं यथा कौस्तुभेन मणिना विनाकृतम् ॥ ३१ ॥

रङ्गवल्लिरचनादि भवत्या प्रस्तुतं किमपि पाणितलेन ।
अन्यथा विरचयन्पृथुको मे हा कदा भवतु लोचनलेह्यः ॥ ३२ ॥
अथवा हरिणाक्षि चिन्तया कृतयैतर्हि कृतं दुरन्तया ।
विभुरेव विधास्यति प्रियं मदिराक्षीमयवामविग्रहः ॥ ३३ ॥

अद्यप्रभृति समाराध्यतां कुमारावतरणाय वटवनीनिकेतनो भगवान्वृषभकेतनः ।

मृकण्डुनाम्ने मुनिपुंगवाय दीर्घायुषं दत्तवतस्तनूजम् ।
सपर्यया यस्य रमाकुटुम्बी साम्बेन लेभे सह शम्बरारिम् ॥ ३४ ॥

इति प्रियतमादेशमिन्दीवरविलोचना ।
निशम्य परिजमाह नियमाचरणक्रियाम् ॥ ३५ ॥

तथा हि । अहरहरियमवगाहनाय निर्गत्य निवासभवनादवनीविलासमुकुरसोमुषीगोचरमरविन्दकरनिष्यन्दमानमकरन्दसलिलदानमन्दीकृतभसलपान्थकुलपरिश्रान्तिगौरवं सरसबिसभङ्गभोजनसभाजितविशदद्विजपरिषदनुवेलपरिशीलितं तरलतरपवनकीर्णतामरसपरागपालिकाम्रेडितमज्जनागतनागरमत्तकाशिनीकुचकलशकुङ्कुमाङ्गरागमम्भोजसौधबिम्बोकलालसकलशजलधिकन्यकाजघनमेखलाकलापकलकलानुसारिसारसनिनादमेदुरम्, अन्तरङ्गमिव तरङ्गिणीपतेः, प्राणसहायमिव मानसस्य, सोदर्यमिव पृथूदकस्य, पृथक्करणभेदमिव पुष्करस्य, विलासविशेषमिव प्रभासस्य, बिम्बान्तरमिव पम्पायाः, सगन्धमिव स्यमन्तपञ्चकस्य, सामन्तमिव बिन्दुसरसः, दुरन्तदुरितधोरणीनिवारणनिपुणशीकरासारमाससाद विमुक्तिकासारम् ।

व्यालेन्द्रनिर्मोचनगभीरभावो विभाव्यते यः परिणाहशाली ।
आसादगस्त्यप्रभवात्कुतोऽपि तरङ्गमालीव निलीनमूर्तिः ॥ ३६ ॥
पयोमृणालीप्रमुखेन वर्तनं वितन्वती भूतिविलेपनिर्मला ।
अनेहसो यापनकर्म यत्र सा तनोति हंसावलिरात्मचिन्तया ॥ ३७ ॥

अस्तातपं क्षितिरुहैरधिगम्य तीरं
यस्याध्वनीनमुदृशो दिनयौवनेषु ।

कान्तोपनीतमपिपत्रपुटं नलिन्या
कह्लारकैरवसुगन्धि पयः पिबन्ति ॥ ३८ ॥

अथ सथात्वभवैरघसंहतिग्रहनिवारणयन्त्रगणैरिव ।
उपनताद्वितिरूर्मिकदम्बकैरकृत तत्र निमज्जनमङ्गना ॥ ३९ ॥

कल्लोलगतिभिहल्लोलमम्बुजनिकुरुम्बमपहाय समुत्तरन्ती पदचरणपङ्क्तिरखिलजनपावनजलावगाहनसुकृतगयपलायमाना कुमारोदयविघातदुरक्षरावलिरिव मृगेक्षणायास्तत्क्षणमलक्ष्यत ।

कृतेऽपि कैवल्यसरोवगाहे पश्चादभूद्बन्धयितिर्ममेति ।
पयःकणव्याजविमुक्तबाष्पां स्नातोत्थिता सा कबरीं बबार ॥ ४० ॥

अनन्तरं सा हरिचन्दनाद्यैरर्कं समभ्यर्च्य तटे सरस्याः ।
धरातलस्थापितजानुहस्ता स्तुत्यानया स्यूतमुखी ववन्दे ॥ ४१ ॥

अध्यात्मा त्रिगुणमयस्त्रिमूर्तिरूपः सृष्टिस्थित्यवधिकरो जगत्त्रयस्य ।
कालेषु त्रिषु विधिकल्पितोपचारस्तापानां सृजतु शमं रविस्त्रयाणाम् ॥ ४२ ॥

यत्सत्ताव्यपगमयोरिहाखिलार्थप्रत्यक्षीकृतिपटिमा पटुत्वलाभः ।
भक्त्या मत्परिकलितेयमस्तु तस्मै देवाय त्रिभुवनचक्षुषे नमस्या ॥ ४३ ॥

यस्यान्ते घनतिमिरोदयापदेशादाकाशे निपतति सत्यवासमोदान् ।
काल्ये तस्करनिकरैरुदस्य लोकान्भास्वन्तं भजत पुनः प्रबोधयन्तम् ॥ ४४ ॥

नैराश्यादसुषु निजप्रवासरूढादालेढुं कमलकरोदरार्पितानि ।
व्याधूय भ्रमरविषाणि यः कराग्रैः प्रत्यूषे रमयति पद्मिनीस्तमीडे ॥ ४५ ॥

भारत्या धृतिमुपि भासि केऽपि लीनाः श्रीनीविद्रुहि महसीतरे निमग्नाः ।
सक्तोऽयं जन इह तेजसि त्रिवेदीसीमन्तारुणमणिमण्डनायमाने ॥ ४६ ॥

आलीभिरवनीदेवकेलीसहचरी ततः ।
कालीनिकेतनं भक्तिव्यालीढहृदया ययौ ॥ ४७ ॥

तत्र च नृशंसतरकंसाहृदन्तरालसंताडनपाटलीकृतपदारविन्दां मधुकैटभतमिस्रहारिविधुपाटवविशेषप्रदानविशदपक्षविभावरीं सैरिभदानवावलेपरसरसिजावसादतुषारधारां शुम्भनिशुम्भदनुजकुम्भिनीधरविभेदनदम्भोलिके-

लिकां निरवधिभुजप्रतापदीपशलभीकृतरक्तबीजपुरोगमदैत्यावलिमलोकत कात्यायनीम् ।

निद्रा हरेरमरशक्तिनिकायमूर्ति-
रक्षादगेन्द्रजनुषः कृतसंनिधाना ।
दुर्गेति पद्मनिलयेति सरस्वतीति
शब्दैरनन्यविषयैरनुभूयते या ॥ ४८ ॥

प्रणिपत्य भगवतीं परमाणुमध्यमेयमित्यवादीत् । 'अविमृश्यकारिणी हरिणीदृशां प्रकृतिः' इति निरपवाद एव निखिलजनवादः ।

विश्वत्रयाशयविमोहनताण्डवेन
केलीसखेन कृतविग्रहया भवत्या ।
विघ्ने विभाविनि तदात्वविकारजन्ये
प्रस्तावि·········महो बत साहसेन ॥ ४९ ॥

महिषदनुजेन्द्रमस्तकनृत्तभवा देवि निपुणता किं ते ।
नटनायकेन सार्कं नाट्यविधाने ततान वैयात्यम् ॥ ५० ॥

अनन्तरमियमहरन्तविहरमाणखण्डपरशुताण्डवावलोकनसमयसमक्ष-सादरोद्घाटयोर्मुग्धिकेशकार्कोटयोराविष्कृतनमस्कृतिरदसीयसंप्रदायपरम्प-रान्तेवासिनमनघचरितानुबन्धभासिनं धर्मशिवदेशिकाभिधानमखिलनिर्म-मजनप्रधानं प्राणंसीत् ।

पन्नग इव भयम·········भक्तिं भगवानिवेश्वरः साक्षात् ।
स्त्रीणां पितेव विनयं दर्शनमात्रेण यः स्मरविजेता ॥ ५१ ॥

तदनु तदनुमदगजगतिरवनिसुरयुवतिरियमचलपतिदुहितृसखभवन-मुखसदनविहितरतिमवनतपरिषदभिलषितफलवितरणसुरविपिनतरुमुरुकर-टतटगलितमदलहरिपरिमलमिलदलिनिकरमुखरमतिविमलवमथुसमुदयकप-टनटदुडुपटलविहितगगनपथमिभवदनमभजत ।

क्रीडाविधौ यः कलधौतशैले रन्ध्राणि दन्ताहतिभिस्तनोति ।
पौरस्त्यविश्लेषितसंधिबन्धदार्ढ्याय शङ्कूनिव दातुकामः ॥ ५२ ॥

द्विरेधा वक्रमम्भोरुहपरिहसनारम्भलोलं प्रवाल-
    श्रीलानिर्माणलीलाचतुरमपि करांश्चिश्चतुर्धा वहन्ती ।
उत्तुङ्गे पश्चिमाङ्गे मरकतसुषमागर्हिणो बर्हिणस्य
    क्रीडागाम्रेडयन्ती ततिरिह महसां कापि भेजे कृशाङ्ग्या ॥ ५३ ॥

तदनु सुतनुरियं परिजनकरापवर्जितभाजनसलिलकृतचरणनिर्णेजना निटिललोचनभवनकक्ष्यान्तरमुपेत्य दाक्षायणी यथाधिरोहणविधिपूततरमति-तुङ्गशृङ्गभासुरमपरमिव रजतभूधरं महोक्षाधिराजमद्राक्षीत् ।

यदीयनासाविवरोपरूढप्रौढानिलावर्तजुषो भजन्ते ।
वातूलवेगाकुलतूलरीतिं सेवागतब्रह्मविमानहंसाः ॥ ५४ ॥

कृतानतिर्गिरिशशाकरयोरथाग्रे
    भक्त्या प्रदक्षिणपरिक्रमणानि सापि ।
सा तन्वती तनयसंभवकारणानि
    विद्योतते स्म सुकृतानि विचिन्वतीव ॥ ५५ ॥

अथाभिधानान्तरमन्तकारेरन्तःपुरद्वारि कृताधिकारम् ।
नाथं गणानां सुयशा सनाथं ननाम सा नन्दिनमानताङ्गी ॥ ५६ ॥

अजोऽहमीशोऽहमहं मुरारिर्विज्ञापनीयो विभवे त्वयेति ।
याच्ञावचो यं प्रति देवतानामुदेति सेवार्थमुपागतानाम् ॥ ५७ ॥

अथ तदानीम्

उर्व्यां न्यस्यापसव्यं चरणसरसिजं सव्यमुत्क्षिप्य कुर्व-
    न्पाणिं तस्योपरिष्टात्परिकलिततिरोबाहुविक्षेपशालि ।
स्वङ्गद्गङ्गातरङ्गं तरलतरजटाजूटरिङ्खन्मृगाङ्कं
    भ्राम्यद्भूपासुजंगं पयसिरुहदृशादर्शि नृत्यन्नटेशः ॥ ५८ ॥

दृष्ट्वा च तमष्टमूर्तिमादराविष्टमतिरवनतशिरःस्पृष्टभूतला हरिणशा-वदृष्टिरभितुष्टाव ।

पद्मासुधालम्बनवामभागं पायादिदं वस्तु भवाभिधानम् ।
यस्मै यदीये यदशासनाधा दिवौकसश्चित्रदशामयन्ते ॥ ५९ ॥

सोऽयं मदीयाशयरङ्गमध्ये सायंनटस्ताण्डवमातनोतु ।
पदारविन्दाभरणे यदीये दधाति नीलोत्पलतां मुरारिः ॥ ६० ॥

..................शीकरकणैरार्द्रा न चेज्जित्वर-
स्फीताक्षीकदृगर्चिषा कथमसौ चान्द्री कला जी...
तत्ताहक्षफणीन्द्रपक्ष्मलविषज्वालावलिं वा भवा-
न्सोढा किं शिव कालकूटकलनापाण्डित्यमालम्ब्यते ॥ ६१ ॥

अस्याङ्घ्रिरम्भोजममुष्य बन्धुं समुद्यतं चण्डकरं च जित्वा ।
तन्नन्दनं दण्डधरं जघान व्यथावहो विक्रमिणा विरोधः ॥ ६२ ॥

चेतः कदाचिदपि मुञ्च न मुञ्जकेश-
कार्कोटकमतिमनःकमलोदयार्कम् ।
चञ्चन्नखांशुशशिमुद्रितभद्रकाली-
वक्राम्बुजं बटवनेशितुरङ्घ्रिपद्मम् ॥ ६३ ॥

अनन्तरमसौ निरन्तरपरिक्षिप्यमाणपक्ष्मवलीकवामपार्श्वौ कलधौतभूधरावलम्बिनीमिव कादम्बिनीमगराजनन्दनामभिवन्द्य वसुंधरासुरचकोरलोचना वाचमेवमवोचत ।

निखिलचराचरपटलीनिर्माणमहेन्द्रजालशीलस्य ।
चण्डि शशिखण्डमौलेर्भवतीं शिखिपिञ्छमालिकां मन्ये ॥ ६४ ॥

छायेव चण्डधाम्ना ज्योत्स्नाकलिकासुधाकरेणेव ।
मणिना प्रभेव मातर्दीव्यसि मिलितादरेन्दुचूडेन ॥ ६५ ॥

सीमतपःस्फारदिने गतया पार्श्वस्थितिं गिरीशस्य ।
हरकोपातपपीडा चित्तभुवः कालिके त्वया जह्रे ॥ ६६ ॥

प्रेङ्खदपाङ्गितबाणा वेल्लद्भ्रूवल्लिकार्मुकोपेता ।
सेनेव चित्तयोनेरहृत विमोरङ्गमम्बिके भवती ॥ ६७ ॥

शिखरितनये भवत्या स्वीकृतमविचार्य पशुपतेरर्धम् ।
शिरसि तदूढसपत्नीचरणाहतिरम्ब न खलु सहनीया ॥ ६८ ॥

दुरक्षराणि द्रुहिणार्पितानि संमार्जयन्तीव सरोरुहाक्षी ।
भूतिं तदा पूनकलोकदत्तां हस्तेन फाले स्वयमाततान ॥ ६९ ॥

आबद्धखेलनमथो निगमाटवीषु
रूपश्रिया हिमरुचेरपि लोभनीयम् ।
रंहोनिवारिततरीशगजावलेपं
सिंहोदरी शिवमसेवत देवसिंहम् ॥ ७० ॥

समाचरितनमस्या मनस्येवमकरोत्सा ।

गङ्गानीरतरङ्गहारिशिरसे गेहीकृतच्छन्दसे
संध्यानर्तनसाक्षिलेखसदसे सत्यां नटच्चेतसे ।
तत्ताद्दग्गरलान्धसे निटिलदृग्दग्धाङ्गजातैधसे
सिद्धश्रेणिशिखाहताङ्घ्रिरजसे सेयं नतिस्तेजसे ॥ ७१ ॥

अथ कमपि सा जटालं हीरच्छायालमिन्दुचूडालम् ।
श्रितवटमूलमविद्याजृम्भणमूर्छालभेषजं भेजे ॥ ७२ ॥

नानाशाखाविवृतमहिमा नाटितश्रान्तहर्षो
मौनालम्बी प्रविततजटामण्डलोदारपार्श्वः ।
न्यग्रोधोऽयं विलसति वियन्निम्नगासङ्गिमूर्धा
प्रत्यासत्तेरिव पशुपतेः प्राप्य सारूप्यलक्ष्मीम् ॥ ७३ ॥

विश्वोन्मेषप्रभृतिरचनां व्यापरीतं धुरीणै-
राचार्यैर्विद्यागुरुभिरभितो भूषितान्तेवसद्भिः ।
धन्यामाशाममिमुखतया तन्वती कुम्भयोने-
रीशस्याव्यादिह वटतले भद्रपीठासिका माम् ॥ ७४ ॥

अध्यासीना वटतरुतलं हासदिग्धारुणोष्ठी
शार्दूलस्य त्वचमधिकटि श्लाघनीयां वसाना ।
मद्वैणाङ्का शिरसि दधती पाणिना बोधमुद्रां
कण्ठे श्यामा जयति करुणा कापि पश्यल्लिटाला ॥ ७५ ॥

अङ्कस्थायाः किमपि वलता हैमवत्याः कुचाग्रे
व्याचक्षाणं मदननिगमान्वामहस्ताम्बुजेन ।
अन्येनार्थानकृतकगिरामञ्चता बोधमुद्रा-
मेक्षे साक्षादखिलजगतामीशमाद्यं गुरूणाम् ॥ ७६ ॥

साक्षात्कृत्य श्रवणमननोपासनाभिर्भवन्तं
द्रक्ष्यन्त्यन्यत्किमिह यमिनस्तावकीनोपदेशैः।
चिन्तारूढां शिव तव चिदानन्दसत्तादिरूपा-
माकाशाख्यामखिलजननीमद्रिजामन्तरेण ॥ ७७ ॥

मोहातीतस्त्वमिह भगवन्मूर्तिमास्थाय तां तां
वेलालङ्घिव्यवहृतिरतो मूढवन्नानटीपि।
आत्मत्राणं भवजलनिधेरात्मनैव प्रणेतुं
वाटे मूढे वससि यदियं भाति न्ते कापि लीला ॥ ७८ ॥

दूरीकर्तुं प्रभवति तवोपासनैव प्रजाना-
मेनोराशीनिति पशुपते वक्ति वाणी पुराणी।
ध्वस्ताहंयुद्रुहिणवदनस्त्वं यदघोरधस्ता-
द्दातः किंवा सृजसि भगवन्नीदृशीमात्मचिन्ताम् ॥ ७९ ॥

शान्तेरेकं सदनममृतासारशीतं प्रकृत्या
हन्तेदानीं भवति भवतो रूपमालोकनीयम्।
ब्रह्माण्डानां प्रसभकवलीकारकाले तु तस्मि-
न्द्रष्टुं दृष्ट्या त्रिनयन भवानेव शक्तो भवन्तम् ॥ ८० ॥

बिम्बोष्ठीनामिव बहुविधाकृतपारिप्लवाना-
मात्मायत्तीकरणगुटिकापङ्क्तिमाम्नायवाचाम्।
पाणेरस्य प्रसवकलिकां पल्लवस्य स्मरारे
स्तौमि ज्योतीरसमणिकृतां तावकीमक्षमालाम् ॥ ८१ ॥

पाणिच्छायाततिमिररुणा स्फाटिकीनाक्षमाला
बीजश्रेणी परिणतिमती दाडिमस्येयमास्ते।
चिन्मुद्रैषा शिव तव समादाय तत्रैकमेकं
हस्तोपान्तस्थितशुकमुखेष्वर्पयन्तीव भाति ॥ ८२ ॥

प्रज्ञावल्लीपरिणतिफले भक्तिबीजप्रजानां
पुष्यन्तीव प्रतिजनमनोभूमिषु न्यासलीलाम्।

अर्धोन्द्रातुं समभिलषितानाददानेव महां
भावत्कीयं त्रिभुवनगुरो भासते बोधमुद्रा ॥ ८३ ॥
पाठीनाङ्कप्रमथनविधिमिह गीर्वाणमध्ये
सद्योजातं सकलनिगमाः संगिरन्ते भवन्तम् ।
सत्यप्येवं कथमिव पुनः साधयस्त्वामजातं
निश्चित्यैकं निरवधिभवक्लेशभीत्या भजन्ते ॥ ८४ ॥
दारान्यन्धूनपि तनुभुवस्लावकीनैर्यबोधैः
सन्तस्त्यक्त्वा सकलमपराङ्मुखयः क्वापि यान्ति ।
कृत्वा कण्ठे गरलमलघुव्याहतोदारसूक्तैः
विन्दन्त्येते न खलु भवतो विप्रलम्भं पुरारे ॥ ८५ ॥
विश्वस्य वेषविकृतामपितां विरक्तिं
पार्श्वे तपस्विजनता भजते गुरोस्ते ।
त्वं दक्षिणाभिमुखतामुपदेशकाले
पुष्णासि चेत्पुररिपो किमियं विषण्णाम् ॥ ८६ ॥
विलसति वटमूले व्यञ्जितज्ञानमुद्रा-
मतिशयरमणायामासिकामादधाना ।
अनिशमुपदिशन्ती योगिनामागमार्था-
न्दरहिमकरचूडा देवता सावधान्माम् ॥ ८७ ॥
ओमित्यक्षरलक्ष्यमिन्दुकलामाबिभ्रतं मौञ्जिना
नधा कलितशेखरं मरकतच्छायां दधानं गले ।
ह्रीङ्कारार्धमिदं शिरीषकुसुमवत्पत्रारविन्देक्षणं
यातःस्थानहताखिलं यमिमनःशीलस्थमीशं भजे ॥ ८८ ॥
कलये जटार्धकरणं मुण्डैर्घटमुन्नमलितटाङ्करणम् ।
भवत महासमयानां जनकं निगमागमैर्निदानमयानाम् ॥ ८९ ॥
निपतन्त्या क्षमाहामतंरस्लो गुणाञ्चनाप्रहाशः ।
मार्गमिमाक्षरटमागतस्तु गुरुर्देव्य दिषमया अवतरत्नः ॥ ९० ॥

महती काचिन्मुद्रा करगतरुद्राक्षमालिकाचिन्मुद्रा ।
निगमादिव्याख्यानस्वातत्र्यवती पुनातु दिव्याख्या नः ॥ ९१ ॥
पुररिपवे भसितेन स्फुरता लिप्ताय वासवेभसितेन ।
घटजन्माशास्याय क्रियतां प्रणतिर्महत्तराशास्याय ॥ ९२ ॥
शान्त्या परमो दान्तः स गुरुर्जगतां चकास्ति परमोदान्तः ।
शाम्यति तापः स्मारं स्मारं चरतां यमर्दितापस्मारम् ॥ ९३ ॥
अञ्चितहासाननया रक्षन्त्या जातजनिजिहासाननया ।
अस्ति भृशं पावन्या धन्या कृपया जटाग्रशम्पावन्या ॥ ९४ ॥
पावनपादपरागः फलघटनधुताक्षकल्पपादपरागः ।
इह महसामतिरेकः क्रीडति हृतनप्रतापसामतिरेकः ॥ ९५ ॥
स्मरभेदि मकटाक्षस्रगुपेतकरः मसादवदप्रकटाक्षः ।
जगदधिकं पाति शयस्थायि सुधागुण्डिकोऽनुकम्पातिशयः ॥९६॥
जननरुजातापघनश्रेणिशरण्यः सुधाभिजातापघनः ।
स्वदते मायातीतः शिव एव वरोरुचित्तमायातीतः ॥ ९७ ॥
एष महीयानवताञ्चिपुरं जिग्ये यतो महीयानवता ।
यस्य च पञ्चाक्षरतस्तरति भयं विषयसप्रपञ्चाक्षरतः ॥ ९८ ॥
मिलदुमया देवतया जितमधिकसदृकथालया देवतया ।
सृजति च सेवनमस्या धुसदामखिलापि धृतरसेव नमस्या ॥ ९९॥
इति संभावयामास नुतिगुम्फामृतैरियम् ।
दक्षिणाभिमुखं दीनरक्षणे रसिकं महः ॥ १०० ॥
चण्डेशमानस्य ततलदग्रे चकार तन्वी करतालशब्दान् ।
विवासयन्तीव वृषाङ्कभक्तिशालिद्रुहो दुष्कृतपक्षिसङ्घान् ॥ १०१ ॥
सा मण्डपे शैलभुवो मुहूर्तमतिष्ठदीशानमनुस्मरन्ती ।
पुरारिसंसेवनपुण्यभारैरासादितैः स्पन्दितुमक्षमेव ॥ १०२ ॥
तदनु गदनाभियातिसदनादधिगम्य निजनिकेतनमनुमेयमध्यमा सकलभूतसमुदायामोदसमर्पणकोविदमतिमात्रविशदमौत्रैकमण्डनमकुण्ठतरवृषपचारमात्मनेतरमपरमिव ताराधिपशेखरमाराधयामास ।

इत्यादिनियमव्रातविध्याहितमहोत्सवा ।
दिनानि कतिचित्साध्वी निनाय निमिषं यथा ॥ १०३ ॥

अथ कदाचिदखिलजनतापातिरेकसमापादनदुरितपरिणतेरिव परिक्षीणतामुपेयुषि वासरायुषि, नवकुसुमसंभृतकमलिनीपरिरम्भजन्मनो दुष्कृतस्येव निष्कृतिं विधातुमाचरति चरमसिन्धुसलिलावगाहनमरविन्दिनीपतौ, रविपतनवेगदूरापसृतनीरधाराकरोदरकुरुविन्दकिरणसंदोह इव वरुणहरिदन्तरालमुपरुन्धति संध्यारागे, संध्यानलकीलचुम्बितव्योमाटवीधूम इव धरणीमण्डलमवकुण्ठयति तिमिरषण्डभावितेजःप्ररोहपटल इव समुन्मीलति दीपिकाजाले, नटनकेलीविहितोद्यमरजनीनर्तकविमुक्तपुष्पाञ्जलिनिकर इव गगनमञ्चति तारकापुञ्जे, सकलदिक्चक्रवालसमाक्रमशीलतमिस्रकोपादिव पाटलवपुषि विजृम्भमाणे विभावरीकुटुम्बिनीबहुलान्धकारपरिपन्थिविमयवीततन्द्रस्य चन्द्रमसो यशोवृन्द इव भुवनमानन्दयति मरीचिकन्दले, प्रयातैकयामायां त्रियामायामासादितनिद्रारसानुभूतौ परिणेतरि तदीयपदसदेश एव पतिदेवतेयमाशयनिवेशितपद्मदलीकचरणा सुष्वाप ।

द्विगुणीकृतदोर्लतोपधाना तरुणी स्थण्डिल एव सा शयाना ।
निजनेतरि निद्रयोपगूढे विदधानेव रुषं तदा व्यलासीत् ॥ १०४ ॥
ततस्त्रियामासमये तरुण्याः पुण्येन साकं परिपाकभाजि ।
अगेन्द्रकन्यापरिणीरमुष्याः स्वप्ने स्वयं लोचनगोचरोऽभूत् ॥ १०५ ॥

उच्चावचानां जगतामुपरि स्थितिमानपि ।
भद्रासनवरं किंचिदध्यासीनः सहोमया ॥ १०६ ॥
मौलिमन्विच्छतो वक्त्रान्मरालस्य परिच्युतम् ।
मृणालधवलं तत्र मृगाङ्कच्छद्मना स्फुरत् ॥ १०७ ॥
संभिन्नदलिके किंचिच्चन्द्रमिशिखाङ्कुरम् ।
घर्तंसेन्दुसुधालोभवलज्जिह्ममिवेक्षणम् ॥ १०८ ॥
कात्यायनीमुखाम्भोजनेत्रोत्पलविकासिकैः ।
आलोकैः प्रकटीकुर्वन्नक्ष्णोरर्केन्दुरूपताम् ॥ १०९ ॥

सहजक्ष्वेलसौहार्दादधिगत्य गलान्तरम् ।
निःसरन्तीमिव सुधां दधानः स्मितचन्द्रिकाम् ॥ ११० ॥
केलीपरवशां मूर्ध्नि गङ्गामसहमानया ।
कण्ठे गाढमिव श्लिष्टः कलिन्दगिरिकन्यया ॥ १११ ॥
कस्तूरिकाभिरालिप्य कंधरामितराङ्गके ।
परागैरिव कार्पूरैः परिक्लृप्तानुलेपनः ॥ ११२ ॥
मनोवागपरिच्छेद्यमहिम्नि स्वस्य तादृशे ।
विश्वविस्रम्भणायेव तन्वन्परशुधारणम् ॥ ११३ ॥
द्वीपिचर्माम्बरालोकत्रासेन मुकुटीविधोः ।
निष्क्रान्तमिव सारङ्गमुद्रीवं धारयन्करे ॥ ११४ ॥
आगतं गिरिजोत्सङ्गादङ्के कृत्वा षडाननम् ।
कराकृष्टजटाजूटखण्डेन्दुमुपलालयन् ॥ ११५ ॥

विततार विभूषणाहिमौलेर्मणिमादाय गृहस्तदा नताङ्ग्यै ।
सुरनाथदिशे सुमेरुपार्श्वादहरारम्भ इवारविन्दबन्धुम् ॥ ११६ ॥
तादात्विकीभिः प्रमदातिरेकतरङ्गिणीवीचिपरम्पराभिः ।
नीतेव कुत्रापि सुमध्यमाया निद्रा सहैव क्षपया व्यरंसीत् ॥ ११७ ॥

तथा हि ।

भूपामणिं दत्तवतः पुरारेश्चूडामणौ स्वार्पणशङ्कयेव ।
शनैर्गलत्यम्बरतो जहास प्राचीदिशा पाण्डुरिमापदेशात् ॥ ११८ ॥
घनकज्जलकर्दमापदेशान्मलिना मन्दिरदीपवर्तिरासीत् ।
प्रमथाधिपतिं विहाय देवं प्रतिभेव श्रितदेवतान्तराणाम् ॥ ११९ ॥
दिशि सांध्यरागमपदिश्य हरेः समये समेधयति वह्निशिखाम् ।
भयसंवृताः प्रतिदिशं सपदि व्यघटन्त संतमसगन्धगजाः ॥ १२० ॥
अभ्यस्य तारकपटाक्षराणां पङ्क्तिं विहायः फलकाधिरूढाम् ।
वर्णान्तरन्यासकृते ममार्ज कालाभिधानः किल कोऽपि बालः ॥१

क्षणदायां प्रयातायामपि तस्या मृगीदृशः ।
सा दिनारम्भवेलैव क्षणदा समवर्त २ ॥

अनन्तरमरविन्दलोचना सरयमुत्थाय समाचरिततीर्थाभिषेचनविधिरपर्णासखवितीर्णमणिसदृक्षतामिव परीक्षितुं प्रभातसमयवणिजा विभावितमम्बरमणिं प्रणिपत्य कृतकर्तव्यकलापा स्नापावसरविलोकितशोभनोदन्तभावणैः प्राणबन्धुमानन्दयामास ।

प्रासादमासेदुषि नीलकन्धरे दुरन्तसंतापभिदाधुरंधरे ।
दधार गर्भे तनयं धरेव सा करीरमत्युन्नतवंशवृद्धये ॥ १२३ ॥

इति श्रीसमरपुंगवस्य कृतौ यात्राप्रबन्धचम्पूकाव्ये प्रथम आश्वासः ।

---

द्वितीय आश्वासः ।

दिनेषु यातेषु ततोऽमितेषु पचेलिमे तादृशि भागधेये ।
वामालका व्यक्तमुवाह गर्भं निधानमम्भोनिधिमेखलेव ॥ १ ॥

सा कृशाङ्गी शरीरेण शरकाण्डविपाण्डुना ।
अत्यशेत दिशं प्राचीमत्यासन्नविधूदयाम् ॥ २ ॥

आह्लादकारिण्यखिलप्रजानां जैवातृके जग्मुषि गर्भसीमाम् ।
प्रत्यग्रलोभ्रप्रसवाभिराममवाप सा रूपमपश्चिमेव ॥ ३ ॥

उदरे किमप्यमृतमुत्पलेक्षणा तपसार्जितं तनयनाम बिभ्रती ।
अतिसौहितीमधिगतेव भोजने विमराम्बभूव विगतादरं मनः ॥ ४ ॥

धृत्वान्वयायामरणा स्वगर्भे दधौ न सा प्रागिव मण्डनानि ।
आसक्तिरर्थेषु शरीरभाजां विशिष्टवस्त्वन्तरलम्भनान्ता ॥ ५ ॥

हन्त मध्यमपरिष्करणार्हे वंशरत्नवरभूषितमासीत् ।
इत्यसोढवदिवाजनि तस्याः श्यामिकाञ्चितमुखं स्तनयुग्मम् ॥ ६ ॥

कुलाङ्कुरादर्शनखेदजन्मा श्यामभुवो वक्त्रविवर्णभावः ।
गर्भोदयामोदभुवः प्रसादाद्दीनो नु पेजे कुचभूधराग्रम् ॥ ७ ॥

साधयिष्यन्स्वेदमिथ्यात्वमर्दयन्मध्यशून्यताम् ।
अर्भको गर्भगस्तस्या निर्ममे संमदाद्वयम् ॥ ८ ॥

---

१. 'माता' इति पाठः

कार्श्यं जहौ गर्भगते कुमारे वलग्नमस्या इति किं विचित्रम् ।
समृद्धिमाधातुमकिंचनेषु संतानशाखीव स हि प्रवीणः ॥ ९ ॥
अल्पानामपि च महत्त्वमाशु दातुं सर्वेषां प्रकटयितुं च सूक्ष्ममर्थम् ।
निष्णातं पृथुकमवोचदस्य योगात्स्तन्यध्यो धृतमहिमप्रकाशभावः ॥१०॥
वामभ्रुवो मध्यवलित्रयाभ्यां किं व्यत्ययेन स्वगुणौ दधाते ।
आद्यं यदत्राजनि दर्शनीयं परं तु वीक्षापदवीमहासीत् ॥ ११ ॥
विद्यानिधाने सविधं विभूषयति तादृशे ।
अतिहर्षादिव जहौ नाभिरस्या गभीरताम् ॥ १२ ॥
भक्तिमात्मनि विधास्यतः शिशोः पालनाय परमप्रगल्भया ।
स्थापितेव मनुना तदन्तिके रोमराजिरकुचन्मृगीदृशः ॥ १३ ॥
विरलाभरणं विपाण्डुवक्रं त्रिवलीभङ्गदरिद्रमध्यभागम् ।
मलिनीकृतचूचुकं मृगाक्ष्या वपुरासेचनकं बभूव भर्तुः ॥ १४ ॥
जठरविहरमाणमाणवगुणानुसारिः परमाणुमध्यमाया बभूवुरध्यवसायाः ।
व्याहर्तुं मृदुलाक्षरामपि गिरं वैक्लव्यमुद्रावती
साटोपं विवरीतुमैहत वधूः सर्वाणि शास्त्राण्यपि ।
रूढाशक्तिभरापि चत्वरगतिक्रीडासु वाराणसी-
पूर्वाणि स्पृहयांचकार चरितुं पुण्यानि तीर्थान्यहो ॥ १५ ॥
पाणिर्वभार किमपि प्रसवापचाये
ग्लानिं द्वितीयकुसुमग्रहणेऽपि यस्याः ।
सा बिल्वपत्रनिकरैः स्वकरोपनीतै-
रीशानपूजनमियेष मुहुर्विधातुम् ॥ १६ ॥
किमङ्गरागेषु परिष्क्रियासु वा तवेष्टमालीति धवेन सा रहः ।
कृतानुयोगा निजगाद कान्तितौ विभूतिरुद्राक्षमणी विलासिनी ॥ १७ ॥
प्रियमभिलषितोपहारशीलं निजहृदये नितरामधत्त साध्वी ।
उदरविहरदर्भकोपलम्भव्यतिकरलोभवशादिव प्रविष्टम् ॥ १८ ॥
अथाध्युषितकेसरिण्यहिमभासि मैवं गते
कलावति तुलाधरोदयमुपेयुषि स्वामिनि ।

स्वतुङ्गजुषि वाक्पतौ मकरभाजि मित्रात्मजे
शुभैकजनने दिने सुतमसूत शातोदरी ॥ १९ ॥
सिंहिकातनुभुवा सह योगः सांप्रतं मृगपतेरजनीति ।
स्पर्धमान इव पुत्रमुदारं प्रत्यपद्यत स पूरुषसिंहः ॥ २० ॥
तस्योदये दातुरवाप लाभं बुधो न तत्पुष्यति विस्मयं नः ।
स्वयं कुजन्मापि धनाधिनाथो भूत्वा स रामामधिगम्य रेमे ॥ २१ ॥
विशङ्कच पृथुकाद्यतो निजनिकारमास्थां तदा
कविः स्वभवने हरिं शरणमेतु तेजोनिधिः ।
अजाश्रयणतत्परो भवतु स द्विजाधीश्वरः
कुलीरसदनान्तरं कथमसौ जगाहे गुरुः ॥ २२ ॥

निजहृदयकण्टकायमानकुमतगण्डलीसमुद्धरणनिपुणविद्वद्वतरणामोद-समासादितप्रसादशालिनीनामाशाविलासिनीनां मुखसरोजनिःसृतो निश्वासविसर इव सहजतुषारसौरभासारतुन्दिलो मन्दमन्दमस्यन्दत गन्धवाहः ।

अथारविन्दोपममायताक्षं सुताननं सुन्दरमीक्षमाणा ।
तपांसि सर्वाणि तदात्मवर्गे प्रसूरपर्याप्तफलानि मेने ॥ २३ ॥
क्षणमीक्षणमुद्रणां तदानीं न विमुञ्चन्नयमर्भको व्यलासीत् ।
निजसूतिविलम्बखेदिताया वदनं मातुरवेक्षितुं विलक्षः ॥ २४ ॥
सुकुमारपाटलकरं निजोदरादुदितं वितीर्णजनलोचनोत्सवम् ।
अरुणं तमङ्कभुवि पङ्कजेक्षणा दधती पुरंदरदिशेव सा बभौ ॥ २५ ॥
निहिताः पुरतो निविष्टदीपाः शुभयष्टीरपदिश्य सूतिगेहे ।
अभजन्फणिनो नु रत्नचूडा हरभूषाहिमणेरमुं विवर्तम् ॥ २६ ॥

अथ तदानीमङ्कुरित इव मङ्गलावेदनकुतूहलमन्योन्यपुरंध्रिकुलसंजल्पितैः, पल्लवित इव नानाविधदानविलासैः, कोरकित इव विविधराजयोगविभाजकैरुदान्तिरश्लोकसूक्तावलिभिः, फलित इव द्विजाशीर्वचोभिर्विशेषैरशेषमपि बन्धुजनमानन्दमनयत तनयोत्सवः ।

गुरुरादराद्य कुमारमैक्षत प्रमथाधिनाथमिव बालताजुषम् ।
. रुरुदङ्कसंवदनरूढवासनाकृतमुष्टिबन्धविलसत्कराम्बुजम् ॥ २७ ॥

प्रागेव कण्ठनिनदैः श्रवणाभिरामै-
रावेदितामथ विलोचनलोभनीयैः ।
आम्रेडितामवयवैरथ भाग्यवत्तां
निर्धार्य तस्य जनको नितरां ननन्द ॥ २८ ॥

स क्षोणीविबुधो मन्त्रै रक्षोनिरसनक्षमैः ।
पूतजन्मभृतस्तस्य जातकर्मविधिं व्यधात् ॥ २९ ॥

असौ पुनरवनीसुरकुमारको मुहुः समाराधयिष्यति मामिति हृष्य-न्मना इव वसुना हविर्ग्रहणकर्मणि तत्क्षणं प्रदक्षिणावर्तशिखः प्रणनर्त ।

तस्य वाधूलसंतानतपःसमुदयाकृतेः ।
धर्माभिधानकरणात्पितृभ्यां दर्शितौचिती ॥ ३० ॥

नयनायुधनर्मगेहमेतत्परिपाल्यं भवतीति शार्ङ्गिणेव ।
वहति स निवेदितं स धीरो हृदि पद्मायुधभीषणं मनोज्ञम् ॥ ३१ ॥

अमृतं नभःसरित एव सूनवे दिशति स्म सा धृतमुरोजकुम्भयोः ।
स विहाय वारि सकलं कथं भवेत्परथा तदेकभजने कृतादरः ॥ ३२ ॥

साधुसंघटितमुष्टिबन्धनं प्रत्यहार्चितपयोव्रतक्रियम् ।
आत्मसूनुमसकृत्प्रसूर्मुदा पश्यति स्म शिशुभावदीक्षितम् ॥ ३३ ॥

कलिना मलिनीकृतां पदाभ्यामवनीं स्प्रष्टुमवेक्षितुं च दृष्टया ।
घृणया मुहुरुद्यताङ्घ्रिरासीदपि चोत्तानशयः स पूतजन्मा ॥ ३४ ॥

कुत्रापि धामनि कुलाद्रिसुतासनाथे
दृष्टिं मुहुस्तरलतारहितां निधातुम् ।
अभ्यस्यतेव पटुतामभुना व्यलोकि
निष्पन्दपक्ष्मनयनेन निशि प्रदीपः ॥ ३५ ॥

मातृवल्लिकुचमञ्जरीमृतां माकरन्दलहरीं धयंधयम् ।
पाणिपङ्कजवनीषु योषितां खेलनं व्यधित बालषट्पदः ॥ ३६ ॥

जनकः कृतजानुयानकेलिं तनयं वीक्ष्य तमादरोत्तरङ्गः ।
चतुरश्चरणान्निधाय धात्र्यां विहरन्तं वृषमेव मन्यते स्म ॥ ३७ ॥

जानुद्वयीचङ्क्रमणक्रमेषु रत्नस्थलीलक्षितमात्मबिम्बम् ।
हस्तेन संताडयति स सोऽयमात्मीयसाम्यासह एव बुद्ध्या ॥ ३८॥

पञ्चषाण्यथ पदानि निधातुं प्रस्खलच्चरणपल्लवमेषः ।
प्रा[र]भन्नपरमस्फुटनीयद्वर्णवल्गुतरमप्यभिधातुम् ॥ ३९ ॥

अजनि खुरलीकेलिस्तीर्थाभिधावनकर्मणि
त्रिचतुरपदन्यासक्रीडैव तस्य गृहाङ्गणे ।
फणितिरभवन्नान्दी स्पष्टेतराक्ष[र]मञ्जुला
विबुधहृदयप्राहिव्याहारनाटकनिर्मितौ ॥ ४० ॥

तन्वीपयोधरपयःकणिका निपत्य
तस्याभिरूप्यजलधेर्मुखशुक्तिकायाम् ।
मुग्धद्विजाङ्कुरततिव्यपदेशशालि-
मुक्तात्मना परिणतिं किल बिभ्रते स्म ॥ ४१ ॥

तस्यालकमकरकुण्डलपद्मराग-
मन्दस्मितद्युतिभिरुन्मिषितां त्रिवेणीम् ।
पित्रोरजस्रमविगाह्य मनोविषादं
तत्याज संततिपथभ्रमणोपजातम् ॥ ४२ ॥

अयं पुनरवनिनिलिम्पश्रावकः शुभसमयनिर्व्यूढचूडामङ्गलो निरङ्कुशविहारकेलिनिर्माणतरलमानसं समानवयःसनाथमाणवमनःसभाजनं खेलनापहृतगृहोपकरणायासितधात्रीकाजनं वचनसीमातिलङ्घितकुतूहलं कौमारमभजत ।

सध्रीचीनकुमारकैरभिनृवस्छात्रायमाणैः स्वयं
शास्त्रव्याकरणाभिनीतिमकरोदारोपिताचार्यकः ।
काशीति त्रिदशापगेति कलयन्विश्वेश इत्यप्यसौ
केल्यामाकलयति स्म पांसुषु पुरीं शैवालिनीदेवताम् ॥ ४३ ॥

क्रीडां विधाय पृथुकैर्गृहमापतन्तं
क्लान्तं क्षमातलरजोभरदूषिताङ्गम् ।

आरोप्य वक्षसि कुमारममुं करेण
स्विन्नं तदीयवदनं जननी ममार्ज ॥ ४४ ॥
ह्रस्वतुलीनां गुरुकीर्तितानामनूक्तिभिः प्रीणितया जनन्या ।
प्रदिष्टमिष्टं लभते स बालः सदैव गण्डस्थलचुम्बनेन ॥ ४५ ॥
कुशाग्रबोधो गुरुणा ततः सकृत्प्रकाशितां वर्णपरम्परामसौ ।
मनोऽप्यनाविष्कृतमस्य किंचिन्महीसुराग्रेसरसूनुरग्रहीत् ॥ ४६ ॥
पुनः पुलर्भूमितले स बालो वर्णावलीविन्यसनं व्यतानीत् ।
विधाय शङ्के बहुधा परीक्षां पद्माक्षरीसंग्रहणं प्रणेतुम् ॥ ४७ ॥
अन्वितानि शुभस्पर्शैरन्तरूष्माश्रितान्यपि ।
व्यञ्जनानि बटोर्जिह्वा सस्वरं समसेवत ॥ ४८ ॥

तदनु निटिलेक्षणाभिधामुपदेक्ष्यमाणमन्त्राधिदेवतामिव विभावयितुं कुबेरदिशामासेदुषि वासराधिपतौ भूसुरापत्यमिदमध्यापयितुमिव कलाकलापमह्नाय संगृह्णति द्विजाधिराजे निजापचितिमागामिनीमिव परिग्रहीतुमाविष्कृतप्रकाशातिरेकेषु कविगुरुपुरोगेषु समागते च शिवतातिदिने जनक एव कृपानिधिरेनमुपानयत ।

स निर्मलात्मा गुरुणा समाहितं त्रयीनिदानं तदवाप्य वाङ्मयम् ।
अशोभत स्वैरमभीशुमालिना शशीव संचारितमंशुमण्डलम् ॥ ४९ ॥
स यज्ञसूत्रच्छलतस्त्रयीमयान्मुखस्फुरन्मात्रसमावृतक्षमात् ।
पराभिचारप्रतिपादनाविलां मृषेतरोक्तिं च मृगत्वचो मिषात् ॥ ५० ॥
तथादर्शी गामिव तावदत्तां पातुं नियन्तुं च स बालवर्णी ।
पाणौ दधाति स्म पलाशदण्डं मौञ्जीं कटीसीमनि मेखलां च ॥ ५१ ॥
शशिपाण्डरेण समिदग्निभसना विहितास्तिपुण्ड्रवितितीरयं प्रति ।
प्रथमागमे गिरिशभक्तिसंपदो रचिता इवाप(द)रत रङ्गवल्लिकाः ॥ ५२ ॥

कल्लोलिताद्ध्वजनकर्मविलम्बनेन
कोपादिव प्रकटगुम्फितशोणभावे ।
संप्रीणयन्निव मुहुश्चरणारविन्दे
पित्रोरवन्दत कृती प्रवदन्निजाख्याम् ॥ ५३ ॥

उपसंग्रहणच्छलादसौ युगलेनात्मकरारविन्दयोः ।
स्वकृते यहुतीर्थचारिणी किमु पित्रोः समत्राहयत्पदे ॥ ५४ ॥
द्राघिष्ठमायुस्तनये निधातुं प्रकाममिच्छामरितेन पित्रा ।
अस्य मुक्तालंकृतिमौलि नाम प्रायुज्यत प्रत्यभिवादनेषु ॥ ५५ ॥
समाश्रितस्याङ्घ्रिसरोजनावं कुमारमेनं गुरुकर्णधारः ।
प्राचीनवाणीकुहनापयोधेः पारं मितैरेव दिनैरनैषीत् ॥ ५६ ॥
वाग्देवीविपण्यवती भावं वल्गुस्वरपदक्रमैः ।
कण्ठगेतस्य सुदृढं कान्तेव श्रुतिरग्रहीत् ॥ ५७ ॥

अपि च, अस्य निपुणदेशिकोपदेशसलिलविमलीकृतमतिरहिराजवचनकुटजाटवीनवजीमूतमालिकां साहित्यवाहिनीपतिशीतद्युतिं कौमारिलचोरसालकुसुमाकरश्रियं निगमान्तकुमुदिनीधवदिवसान्तसमयलक्ष्मीमक्षचरणपक्षराजीवतापनरोचिश्छटां मौढिमादीकत ।

कविवाचस्पतिबुधाः कथयापि न तत्समाः ।
मूढता मुहुरेतेषामापतत्यनियन्त्रणा ॥ ५८ ॥
निःसीमपद्मनिरिष्टिानुभावमकाशनं मत्युपकारयन्ती ।
स्वशीलिनः संततमस्य मोदं वेदादिविद्याविततिर्व्यतानीत् ॥ ५९ ॥

अस्य पुनरभ्यस्यतः कलां गुरुतर्कनिवासजनुषगुरुतरक्लेशमसहमान इव शनैः शनैरपसरति शैशवे सकलकलाधिकारसत्कारिबाल्यापमोदपरिणतं क्षोभमपनेतुकाम इव कामरिपुचरणपरिचरणोपकरणानां करणानामतिनिपुणिमानमुपपादयन्नवतरुणिमा वपुरसोढकुसुमायुधमसेवत ।

स्वभजनोचितवस्तुविवेचनं समभिलष्य किमस्य विलोचने ।
श्रवणयोरवकर्णितशास्त्रयोः सविधभूमिमभूषयतामुभे ॥ ६० ॥
फलितःप्रहनेव कालकण्ठस्थितिपर्याप्ततमावकाशभावे ।
अदर्शयद्दन्तरालमासीत्परिणाहातिशयमणीतरोमम् ॥ ६१ ॥
याल्लोऽयमामानुविलम्बिबाहुराल्लोकि लोकैरतिरूपशाली ।
आराधनैः प्रीणनमात्मरात्रोः कर्तुं क्षितौ काम इवावतीर्णः ॥ ६२ ॥

तदनु द्विजकन्याया धन्यायाः सदृशैर्गुणैः ।
संतानसंपदे तेन पाणिमग्राह्यत्पिता ॥ ६३ ॥
पार्श्वभूषा भवानीव पद्मेव हृदयंगमा ।
सरस्वतीव सा गुरव्या भर्तुरासीत्पतिव्रता ॥ ६४ ॥
अजायत तयाक्रान्तममुष्य हृदयं तथा ।
यथान्तरं न विन्देरन्नीषदप्यन्ययोषितः ॥ ६५ ॥
शुभलक्षणशोभिन्या भावनापरिशुद्धया ।
पुरंध्र्या सोऽरुचद्वेदः पूर्वमीमांसयाऽयथा ॥ ६६ ॥

अहो महीसुरभुवो महाभागस्य भागधेयपरिपाकः, यदेव मदनगजराजमदभेपजे रजोभरविजृम्भमाणमातरिश्वनि विषयमृगतृष्णिकाजलविभावनोष्णसमये तमोविकारसंपादननिशावतारसंपदि कुपथावगाहघटनहरिन्मोहगौरवे पटुतरविवेकशिलापाटनविधानहस्तिनि तथाविधे वयसि वर्तमानोऽपि भगवति मृगाङ्कशेखरे समनोनदीललामनि सुदतीमयार्धविग्रहे महती भक्तिरजनि ।

चन्द्रमसि चन्दनतरौ सुदृगाश्लेषे सुधाशुभूषे च ।
स्निह्यति न कस्य चेतः कठोरसंतापकन्दलीहरणे ॥ ६७ ॥
अनूढमसितो भल्लेरशीलितषडक्षरः ।
अपूजितपुरारातिरभुङ्क्त न कदाप्यसौ ॥ ६८ ॥

आगामिनामङ्गजवैरिमैवे हृदम्बरालम्बिनि हर्षवृष्टयै ।
पौषेकहेतुं पुलकाङ्कुराणामभूपयद्गात्रमसौ विभूत्या ॥ ६९ ॥
नदीं महोक्षं शिशिरांशुरेखा वाताशनेन्द्रं यजनं च भूतेः ।
वाम्छन्स पञ्चाक्षरमग्रलक्ष्यादाचष्ट तद्वाचि पदादिवर्णात् ॥ ७० ॥
शंभोरजस्रं जलगन्धपुष्पैराप्लावनालेपनमण्डनानि ।
आत्मीयतापत्रितयापनीतिं विधातुकामः स कथं व्यतानीत् ॥ ७१ ॥
अनमर्पितमगात्मजापतेरस्तुतं प्रतिनिलिम्पभोजनम् ।
अस्पृतं सदनिवेदितं त्वभूदोदनोऽप्ययमनेन सेवितः ॥ ७२ ॥

सरिद्वतंसस्य जलाभिषेको बालेन्दुमौलेः प्रसवोपहारः ।
स्यात्किं मुदे तस्य कृते मयेति समादि(धि)दम्भादकरोत्स चिन्ताम् ॥ ७३ ॥
भक्तेषु प्रमथपतेः पदार्चनायां पर्याप्तं बलिमुतमेष मन्यते स्म ।
पौलोमीपरिवृढमुत्सवायलोके व्यालेन्दुं विविधगुणप्रशंसनेषु ॥ ७४ ॥
चेतोनिविष्टस्य सितांशुमौलेः परिस्थुतं मौलिपदास्त्रगर्भे ।
प्रालेयधामानमदच्छ(इछ)लेन प्रासूत धन्या भवनं कु(क)लानाम् ॥ ७५ ॥
अनिशं गिरिशातिवादशीलं परमेष्ठी किममुं प्रणेतुकामः ।
अपदिश्य घटीभवादिसर्गानपठिमाभ्यासविधिं परं वितेने ॥ ७६ ॥
किमेष नन्दी शिवधर्मचक्ता किं वा कुमारः श्रितनीलकण्ठः ।
आहो मुरारिः कृतहरिहरीशे पार्थोऽथवा पाशुपताभिमानी ॥ ७७ ॥
एवमुत्प्रैक्ष्यत जनैरेधमानकुतूहलैः ।
बाल एव परां कोटिं शिवभक्तेः श्रयन्नयम् ॥ ७८ ॥
अपि सकलार्थविदोऽभूदर्थत्रयमेव चिन्तनीयं मनसि ।
मोहोच्चाटनमूलिका तनुभृतां मुक्त्यङ्गना कारणा
दूती भाग्यवतामधर्मफलमस्तोमावसादस्थली ।
लीलाताण्डवशालिका पशुपतेर्लक्ष्मीमणीपेटिका
कलिजन्मनि लोचनातिथिदशां गाहेत वाराणसी ॥ ७९ ॥
कैवल्यामृतकन्दलीं वसुमतीकान्ताप्रसूनस्रजं
मौलिक्षौमपटीं हरस्य हिमवन्मातङ्गशुण्डालताम् ।
स्वर्गारोहणमार्गमौक्तिकशिलासोपानपारम्परीं
भाग्यैरभ्यधिका जना भगवतीं पश्यन्ति भागीरथीम् ॥ ८० ॥
सुखनिधिमपहस्य मायया स्वयमतिसंनिहितोऽप्यलक्षितः ।
सुकृतिभिरधिकाद्यि गृह्यते श्रुतिकथितः [redacted] हि वरकरामणीः ॥ ८१ ॥
अकथयच्च सच्छात्रान् ।
तीर्थावगाहस्थितिकल्पनायामर्चाविधौ वा यदि वोऽभिलाषः ।
नदीषु गङ्गां नगरीषु काशीं देवेषु विश्वेश्वरमाश्रयध्वम् ॥ ८२ ॥
जिज्ञासवे श्रुतिशिरोनिकरान्प्रवक्तु-
मादौ यदक्षरमुपाददते महान्तः ।

श्रोत्रे तदेव विनिवेद्य जनान्भवाब्धे-
रुत्तारयन्तमुपधावत विश्वबन्धुम् ॥ ८३ ॥

अधिकाशि देशिकानामवतंसमणिं तमेव सेवध्वम् ।
यो रहसि किंचिदक्षरमुपदिश्य जनान्करोति सर्वज्ञान् ॥ ८४ ॥

अथ भक्तिवशादमुष्य काशीं प्रति यातुं स्पृहयालुचेतसोऽपि ।
अभयजनकाङ्घ्रिपद्मसेवानियमातिक्रमभीतिरन्तरायः ॥ ८५ ॥

असौ पुनरात्मपितरावेव महीधरापत्यकुसुमास्त्रशासिनौ तदधिवासवसुमतीमेव सुरस्रवन्तीमनुचिन्तयन्यथोदितसमयविधेयनियतकार्यपरायणमनाः सूर्यनारायणसमरपुंगवाभिधानाभ्यामसमानविनयधुर्याभ्यां सोदर्याभ्यामन्तरचितचरणारविन्दपरिचरणो निरवधिस्नेहपरिवाही जनकविहिताभिलषितकर्मा सहधर्मिणीमणीतसमधिकानुरोधविधिरतिमहान्तमन्वभूदानन्दम्।

सौभागिनेयः स तदा शोभायै श्रुतिसंपदाम् ।
असेवत शिवाकल्पकल्पमप्पय्यदीक्षितम् ॥ ८६ ॥

पुस्तककरा बुधावलिरुच्चद्व्याख्याकृतः पुरो यस्य ।
पटुवाक्सुलप्रवाहप्लवनावष्टब्धपोतफलकेव ॥ ८७ ॥

निन्दति मकरन्दरसं न्यक्कुरुते शर्करां पयो जयति ।
मोचामदमाचामति वाचामधिपस्य वैखरी यस्य ॥ ८८ ॥

यन्मुखविगलद्वाक्सुखखुरपुरतटिनीजडीकृता विदुषाम् ।
फणितिर्दन्तपटाभ्यामजीघटद्गाढमात्मसंवरणम् ॥ ८९ ॥

वादिमतपुण्ड्रवाटीनिष्पीडननर्मयुक्तियन्त्रेण ।
भुवि यः सृजन्नजृम्भयदवदातं ख्यातिफाणितव्रातम् ॥ ९० ॥

यस्य च मनीषिणामग्रगण्यस्य शिबिकाप्रसीमनि वैतालिकवदननिःसृता सरस्वती शश्वदेवमश्रौषम् ।

दुरभ्यस्तविद्यालवेनापि केचिद्दुरन्ताग्रहन्तामयन्तां कृतं तैः ।
प्रशस्ते कवित्वे समस्तेऽपि शास्त्रे भवत्यप्पयज्वावतंसात्कृती कः ॥९१॥

रे रे सुव्रत धावनानि विमताः सेवध्वमङ्घ्रिद्वयी-
मप्पय्याध्वरिणो घटेत भवतामेतत्प्रसादस्तदा ।

तुष्यन्त्यक्षिगतेष्वपि प्रपतनात्सन्तः समृद्धागसः
काकस्यानतिकारिणो हि दयते किं नो रघूणां प्रभुः ॥ ९२ ॥

यश्च सकलविपश्चिदावलिधुरंधरो वसुंधरोल्लङ्घनजङ्घालशोभापिचण्डिलैर्यशोमण्डलैरजगर्हदभिनवकेतकवर्हम्, अवनीवलयानन्दसंदायकविलासकैर्गुणविलासैरजिह्मिपदम्भोजदुर्हृदम्, त्रिवेलकलितसपर्यापरिचर्याभिप्रीणदगराजकन्यकाप्रणयिनम्, अचलगुहाविहरदिभरिपुगर्जितोर्जितप्रणादैर्वादविनोदैरततक्षदहितविबुधदाक्ष्यम्, अनवरतायातयाचकप्रियंकरणैर्वितरणैरचकम्पदशोपदातृयशःस्तम्भम्, अङ्घ्रिपङ्केरुहसेवाहेवाकमण्डलितान्यपण्डितानलल्लङ्घवागमसागरसागरसंघम्, अनवद्यविद्याविशेषभूषणमञ्जूषया मनीषयाचचर्वदमरगुरुगर्वम्,

यस्याजस्रमुदित्वरेण हविषाक्रान्ते दिशामन्तरे
तस्तम्भे कुमुदालयेन चकृशे ताराधिपच्छायया ।
सस्रंसे शरकाण्डपाण्डुरतया मम्ले मरालश्रिया
प्रभ्रंशे बिसकान्तिभिर्विजगले डिण्डीरखण्डांशुभिः ॥ ९३ ॥

यत्कीर्तिमकरद्विपस्य विहृतिस्थानं जगन्मण्डलं
घण्टे चण्डमयूखशीतकिरणावालानमद्रीश्वरः ।
कक्ष्या व्योमतरङ्गिणी वमथवस्तारागणाः सप्तधा
निर्मुक्ता मदवारिनिर्झरपरीवाहाः पयोराशयः ॥ ९४ ॥

कर्णः श्रीचिक्कभोम्मक्षितिपतिरभितो लम्भयन्शातकुम्भ-
स्तोमं हेमाभिषेकप्रणयनसमये यस्य मूर्तिं प्रशस्याम् ।
रेजे श्रीरङ्गराजाध्वरिवरकलशाम्भोधिलब्धप्रसूते-
र्विद्याकल्पद्रुमस्य स्वयमिव कलयञ्जातरूपालवालम् ॥ ९५ ॥

नीलकण्ठमतनिर्वहणोत्कादुक्तिवृष्टिमुपलभ्य तदम्भात् ।
ईशयोग्यमयमाशयभूमौ बोधशालिभरमेवयति स्म ॥ ९६ ॥

अहो विबुधवर्गाय सकलाः सफला अपि ।
दिशञ्जनिशमेताभिर्द्विजाधिपतिरैधत ॥ ९७ ॥

इति श्रीसमरपुंगवस्य कृतौ यात्राप्रबन्धे द्वितीय आश्वासः ।

---

तृतीय आश्वास ।

शक्तिमस्याभिरूपस्य सकलागमशोधने ।
पटीयसीमिवामृष्यन्प्रादुरास मधुस्तदा ॥ १ ॥

मध्येवन भूरिदिनोपजातमौनव्रताना कलकण्ठयूनाम् ।
समग्रवाग्वैभवसंप्रदायससिद्धिहेतु समयो जजृम्भे ॥ २ ॥
दिनान्यभूवन्नवशीधुनापि विना जनाना मदसाधनानि ।
कदर्पबाहाविजयाङ्कगीतसदर्भनिष्णातशिलीमुखानि ॥ ३ ॥
मधौ मिलत्सपदि क्लृप्तभावा सीदद्भि र्ति शिशिर धरित्री ।
शनै शनैर्यद्विजहौ वधूना साधारणीना प्रकृति किलेदम् ॥ ४ ॥
यियन्महोदन्वति दक्षिणाशाव्यापारभाजस्तरणेर्निवृत्तिम् ।
तदात्ववातानुगुणा ततान सायांत्रिक किं समयाभिधान ॥ ५ ॥
शीम्ना जडिम्ना शिशिरेण दत्तामात्माकृते सकुचितामवस्थाम् ।
दिनानुपूर्वी त्यजति स्म जाते सुखैकहेतौ सुभगे वसन्ते ॥ ६ ॥
स्वीकर्तुमुर्वी शिशिरर्तुभूपे विजृम्भमाणे भृशविस्तृताभि ।
गते तस्मिन्क्षणदाभिधाभिर्निमीलित नीलपटीकुटीभि ॥ ७ ॥
प्रादुर्भवन्ती महिरब्जिनीना सर्वर्तिकासद्वतिरानभासे ।
नीहारवर्षात्ययनिर्णयाय प्रसारिता पाणिपरम्परेव ॥ ८ ॥
मनो वशीकुर्वति माधवेन व्यक्तीकृते कोकिलवशनादे ।
वल्ली क्षुधा मलयसुन्दरीणा पटैरिवाभ्रश्यत पाण्डुपर्णै ॥ ९ ॥
तपोनभस्त्प्रभवेन क्लृप्ता त्रासेन नीहारसमावृर्ति या ।
वसन्तविश्लेषवलक्षपाता जहौ जरत्पत्रमिषेण वल्ली ॥ १० ॥
समं पुराणच्छदनैर्लतानामणूदरीणामतिधैर्यभारम् ।
बालानिले मुष्णति पल्लवेषु बभूव चित्तेषु च रागबन्ध ॥ ११ ॥
समीरण चापलक्लृप्तपाण्डुपर्णांशुकाकर्षणपारवश्यम् ।
वल्ली वलत्पल्लवपाणिनेव निवारयन्ती नितरा चकाशे ॥ १२ ॥
आरामसीमामधिजग्मुषे नु दातु वसन्ताय गणैर्मरूणाम् ।
प्रयाउशीमुग्मपटोपहारसाधनागागारैर्बभूवे ॥ १३ ॥

पर्यायतः पाटलमञ्जरीषु चरन्त्यलीनां पटली चकाशे ।
तत्तन्मधुस्वादिमतारतम्यविवेचनायै विहितोद्यमेव ॥ १४ ॥
अनङ्गबाणावलिरध्वनीनवान्तेषु शोकज्वलनाकुलेषु ।
निपातजातं किल नीलिमानं निलीनलोलम्बनिभाद्बभार ॥ १५ ॥
माकन्दवाटीषु मधुव्रतानां कुलं वितेने कलकूजितानि ।
पिकावलेश्चित्तपञ्चमायास्तानार्पणायेव धृताभिलापम् ॥ १६ ॥
गलन्मरन्दप्रमदाश्रु गीतमाकर्णयन्कौकिलमाम्रशाखी ।
शाखाञ्चलेमानिलचञ्चलेन छायाचलन्मौलिरिव व्यलासीत् ॥ १७ ॥
क्रोशन्तमिन्दिन्दिरमोपलक्ष्यात्पिकारवालोलितया प्रसाद्य ।
समीरपोतं सहकारवाटी धन्या मधुस्तन्यरसैरपुष्णात् ॥ १८ ॥
सकिङ्किणीकः कलचञ्चरीकैः प्रसूनधूलीपरिधूसराङ्गः ।
अङ्कानुपारुह्य दिगङ्गनानां बालानिलः साधु बबन्ध लीलाम् ॥ १९ ॥
वने वने वल्गुगिरां पिकानां कलस्वनाकर्णनकौतुकं वा ।
परागपालीषु परिभ्रमो वा मरुद्विहारेऽजनि मान्द्यहेतुः ॥ २० ॥
पिकद्विजं च स्पृहणीयवाचं मधुद्विरेफं च मधुः पुपोष ।
सतो गुणानप्यसतोऽपि दोषाञ्ज्ञात्वा विहीनो न विवेक्तुमीष्टे ॥ २१ ॥
वसन्तलक्ष्म्या वनकेलिभाजो लाक्षारसार्द्राः पदपङ्क्तयो वा ।
छिन्नस्य वा किंशुककैतवेन शीतस्य रेजुः सरसैकदेशाः ॥ २२ ॥
पान्थप्रियालस्य भरैकहेतोरपि प्रियालस्य गुणानभिज्ञाः ।
उत्तानचित्ता भृशमुत्फलाढ्यो गानैर्विकासं घटयांबभूवुः ॥ २३ ॥
दृष्ट्या वधूनां तिलकद्रुमस्य स्वच्छन्दमासीत्सुमनोविलासः ।
सचेतनानां किमु शम्बरारिशरावलीजर्जरिताशयानाम् ॥ २४ ॥
निश्वासवातेन नितम्बिनीनामुद्भावितोपस्कृति सिन्दुवारम् ।
अलंचकार श्रवणं यदासां कृतज्ञभावानुगुणः किलेदम् ॥ २५ ॥
सनर्महासाङ्कुरचन्द्रिकाणामणूदरीणामनुकुर्वतेव ।
नमेरुणाभूयत सम्मितेन जनस्य चित्तेन तु विस्मितेन ॥ २६ ॥

तृतीय आश्वासः ।

शक्तिमस्याभिरूपस्य सकलागमशोधने ।
पटीयसीमिवामृष्यन्प्रादुरास मधुस्तदा ॥ १ ॥

मध्येवनं भूरिदिनोपजातमौनव्रतानां कलकण्ठयूनाम् ।
समग्रवाग्वैभवसंप्रदायसंसिद्धिहेतुः समयो जजृम्भे ॥ २ ॥
दिनान्यभूवन्नवशीधुनापि विना जनानां मदसाधनानि ।
कंदर्पबाहाविजयाङ्कगीतसंदर्भनिष्णातशिलीमुखानि ॥ ३ ॥
मधौ मिलत्संपदि क्लृप्तभावा सीदद्धि''''र्ति शिशिरं धरित्री ।
शनैः शनैर्यद्विजहौ वधूनां साधारणीनां प्रकृतिः किलेदम् ॥ ४ ॥
वियन्महोदन्वति दक्षिणाशाव्यापारभाजस्तरणेर्निवृत्तिम् ।
तदात्ववातानुगुणां ततान सांयात्रिकः किं समयाभिधानः ॥ ५ ॥
शीघ्रा जडिम्नः शिशिरेण दत्तामात्माकृतेः संकुचितामवस्थाम् ।
दिनानुपूर्वीं त्यजति स्म जाते सुखैकहेतौ सुभगे वसन्ते ॥ ६ ॥
स्वीकर्तुमुर्वी शिशिरर्तुभूपे विजृम्भमाणे भृशविस्तृताभिः ।
गते तु तस्मिन्क्षणदाभिधाभिर्निमीलितं नीलपटीकुटीभिः ॥ ७ ॥
प्रादुर्भवन्ती बहिरब्जिनीनां संवर्तिकासंहतिराबभासे ।
नीहारवर्षात्ययनिर्णयाय प्रसारिता पाणिपरम्परेव ॥ ८ ॥
मनो वशीकुर्वति माधवेन व्यक्तीकृते कोकिलवंशनादे ।
वल्ली मुधा मल्लवसुन्दरीणां पटैरिवाभ्रश्यत पाण्डुपर्णैः ॥ ९ ॥
तपोनमस्यप्रभवेन क्लृप्तां त्रासेन नीहारसमावृतिं वा ।
वसन्तविक्षेपवलक्षपातां जहौ जरत्पत्त्रमिषेण वल्ली ॥ १० ॥
समं पुराणच्छदनैर्लतानामणूदरीणामतिधैर्यभारम् ।
मालानिले मुष्णति पल्लवेषु बभूव चित्रेषु न रागबन्धः ॥ ११ ॥
समीरणं चापलल्लस्तपाण्डुपर्णांशुकाकर्षणपारवश्यम् ।
वल्ली चलत्पल्लवपाणिनेव निवारयन्ती नितरां चकाशे ॥ १२ ॥
आरामसीमामधिजग्मुषे नु दातुं वसन्ताय गणैस्तरूणाम् ।
प्रवालकौसुम्भपटोपदारसनाथमागामरवैर्बभूवे ॥ १३ ॥

पर्यायतः पाटलमञ्जरीषु चरन्त्यलीनां पटली चकाशे ।
तज्जन्मधुस्वादिमतारतम्यविवेचनायै विहितोद्यमेव ॥ १४ ॥
अनङ्गबाणावलिरध्वनीनवान्तेषु शोकज्वलनाकुलेषु ।
निपातजातं किल नीलिमानं निलीनलोलम्बनिभाद्बभार ॥ १५ ॥
माकन्दवाटीषु मधुव्रतानां कुलं वितेने कलकूजितानि ।
पिकावलेरञ्चितपञ्चमायास्तानार्पणायेव धृताभिलापम् ॥ १६ ॥
गलन्मरन्दप्रमदाश्रु गीतमाकर्णयन्कौकिलमाम्रशाखी ।
शाखाञ्चलेनानिलचञ्चलेन श्लाघाचलन्मौलिरिव व्यलासीत् ॥ १७ ॥
कोशान्तमिन्दिन्दिरघोपलक्ष्यात्पिकारवालोलितया प्रसाद ।
समीरपोतं सहकारवाटी धन्या मधुस्तन्यरसैरपुष्णात् ॥ १८ ॥
सकिङ्किणीकः कलचञ्चरीकैः प्रसूनधूलीपरिधूसराङ्गः ।
अङ्कानुपारुह्य दिगङ्गनानां बालानिलः साधु बबन्ध लीलाम् ॥ १९ ॥
वने वने वल्गुगिरां पिकानां कलस्वनाकर्णनकौतुकं वा ।
परागपालीषु परिभ्रमो वा मरुद्विहारेऽजनि मान्द्यहेतुः ॥ २० ॥
पिकद्विजं च स्पृहणीयवाचं मत्तद्विरेफं च मधुः पुपोष ।
सतो गुणानप्यसतोऽपि दोषाञ्ज्ञात्वा विहीनो न विविक्तुमीष्टे ॥ २१ ॥
वसन्तलक्ष्म्या वनकेलिभाजो लाक्षारसार्द्राः पदपङ्कयो वा ।
छिन्नस्य वा किंशुककैतवेन शीतस्य रेजुः सरसैकदेशाः ॥ २२ ॥
पान्थप्रियालस्य मरैकहेतोरपि प्रियालस्य गुणानभिज्ञाः ।
उत्तानचित्ता मृगशुपलाक्ष्यो गानैर्विकासं घटयांबभूवुः ॥ २३ ॥
दृष्ट्या वधूनां तिलकद्रुमस्य स्वच्छन्दमासीत्सुमनोविलासः ।
सचेतनानां किमु शम्बरारिशरावलीजर्जरिताशयानाम् ॥ २४ ॥
निश्वाससवातेन नितम्बिनीनामुद्भावितोपस्कृति सिन्दुवारम् ।
अलंचकार श्रवणं यदासां कृतज्ञभावानुगुणः किलेदम् ॥ २५ ॥
सनर्महासाङ्कुरचन्द्रिकाणामणूदरीणामनुकुर्वतेव ।
नमेरुणाभूयत सम्मिनेन जनस्य चित्तेन तु विस्मितेन ॥ २६ ॥

खखिन्वधूभिः सुदद्दोपगूढे विटान्प्रहर्तुं विहिताभ्यसूयान्।
अस्त्रार्थिनं नूनमनन्यजाय कदम्बकं कोरकं व्यतानीत्॥ २७॥
कङ्केलिसालः कमलेक्षणानामङ्घ्रेः प्रणीताभिहतेर्निपीताः।
घमम्प्रवालान्व्यपदिश्य लाक्षां स्पष्टं वितेने निजपादपत्वम्॥ २८॥
तथादृशं भाजनमङ्गनानां हस्ताम्बुजस्पर्शनगौरवस्य।
तत्पादघातैकपदं मसूनैस्तरुं जहासेव रसालसालः॥ २९॥
अलिद्विजैराद्रणीयनादव्याजेन क्लृप्तस्वरवेदपाठैः।
मन्ये न यन्यां मदिरानुपङ्गकलङ्किता गन्धफली सिषेवे॥ ३०॥
मधुश्रियः काञ्चनकर्णिकेव मनोभुवो हैममिवातपत्रम्।
आलोकि लोकैरथलाजनोक्तिकार्यसितालंकृति कर्णिकारम्॥ ३१॥
नीलालकावक्रनिपीतशेषहालारसापादितहासशाली।
मदोदयभ्रान्तमधुमत्ताक्षः शाखी जनस्याजनि कामपालः॥ ३२॥
सेतुं मति प्रतिष्ठासा शिष्टसूनोरथोदिता।
काशीगतिफलाधीतैरादौ प्रणवतामधात्॥ ३३॥
प्रहैरशेषैः फलितानुकूल्ये क्षणे पितृभ्यां रचिताभ्यनुज्ञः।
गान्धैः कृतस्वस्त्ययनो मनीषी प्रातिष्ठत प्रेक्षितसन्निमित्तः॥ ३४॥
तमनु प्रस्थिता धन्या तादृक्प्रेमशालिनी।
व्यद्योतत मनोवृत्तिः पित्रोरिव सहायिता॥ ३५॥
कथाभिमानैः सुहृदामुदारैरसंभृताध्वश्रमसंपदेपः।
आवासमद्वैतरसालनेतुराकल्पमुर्व्याः पुरमभ्ययासीत्॥ ३६॥

अथ तस्य नयनपथमासीदति शुनासीरवसतिरपि भूषितमहीतला, समधिगतदक्षिणपथापि सर्वोत्तरस्वभावा, पावनतरानुभावापि पल्लवेषु कृतस्थितिः, अयोध्यापि भोगवती, विशालापि मथुरा, महोदयापि द्वारवती, वाराणसीव वरणोपवेष्टिता, वस्वोकसारेव धनदोपशोभिनी, वारवधूटिकेव वशीकृतधूर्तावतंसा, कंसारिमूर्तिरिव कमलाकरोपगूढा, रूपकपरम्परेव रुचिरविधिविराजिता, संगीतविद्येव सारङ्गनाटिकावती, पार्थसमृद्धिरिव पाञ्चालिकाञ्चिता काञ्चीपुरी।

स्पर्धां विधाय प्रभुणा गिरीणां संवर्धमानो दिवि यत्र सालः ।
विचिन्त्य विन्ध्याचलशासिशक्तिं तिष्ठन्निवाभाति भियार्धमार्गे ॥ ३७ ॥
आनन्दामृतनिधिमर्धचन्द्रमुद्रं भोगेन स्फुटमभिवेष्ट्य सालनाम्ना ।
पूर्वार्धे भुजगपतेरिव स्थितस्य प्रोत्तुङ्गं विलसति गोपुरं यदीयम् ॥ ३८ ॥

यद्गोपुरं निशि समुच्छ्रितशृङ्गसीम-
विश्रान्तशीतकिरणच्छुरितं दधाति ।
पद्मासनस्फटिकपात्रपतज्जलौघ-
संभाव्यमानकमलासनिवाह्निलीलाम् ॥ ३९ ॥

महीयसा गोपुरमन्दरेण प्रमथ्य सिन्धुं परिखाभिधानम् ।
आसादितस्येव नवामृतस्य तृप्यन्ति यत्र स्थितिमादधानाः ॥ ४० ॥
प्रतप्तजाम्बूनदपेशलाभिः पराजिता यत्प्रमदातनूभिः ।
सौदामिनी साध्वसपारवश्यादश्रान्ततारल्यमहो जिहीते ॥ ४१ ॥
कुचाचले लोचनकोणभागे फचान्धकारेऽपि च कामिनीनाम् ।
जागर्ति यत्राहितसंनिधानात्पिनाकिनो भीतमना मनोभूः ॥ ४२ ॥
शश्वत्प्रतोलीसरणीषु कामं परम्परा भ्राम्यति यत्र यूनाम् ।
शातोदरीलोकदरावलोकसंमोहनास्त्राहतिविह्वलेव ॥ ४३ ॥

प्रविश्यतां विपश्चितामपश्चिमोऽयमाश्चर्यपीतमतिरेतदवादीत्—'अशेषजननयनयोग्यममुष्याः किमपि सौभाग्यम्, यदवलोकनलोलुपतया भूशमनेकपशैलराजशिखरमरविन्दलोचनोऽपि भगवान्प्रतिदिवसमधिवसति ।

वाणीसहचरस्यास्य वाजिमेधाध्वरक्षितौ ।
गोपुरावलिकूटेन भाति यूपपरम्परा ॥ ४४ ॥

अस्याः प्रभावेण जनस्य वाणी मन्दापि पाटीमधिगन्तुमीष्टे ।
विधेः मिथोदादरणं किलात्र सा मन्थरा वेगवती भवन्ती ॥ ४५ ॥
प्रसार्य नानाविधपण्यजातं प्रातः क्षपायामुपसंहरन्ति ।
इयं पुरारेरनुयाति लीलां प्रपञ्चसर्गप्रलयैकलीलाम् ॥ ४६ ॥
शरीरिणोऽस्या मणिसालगर्भप्रवेशनिष्कान्तिदशापदेशात् ।
त्रिपोढुमहाय विमुक्तिकन्यामाहृय जन्मान्यनुभुञ्जते किम् ॥ ४७ ॥

कल्याणसंतानतरुं कयापि श्लिष्टं जगन्मङ्गलकल्पवल्ल्या।
आसीनमस्या वरणालवाले फलार्थिनः केऽपि भजन्ति धन्याः'॥ ४८॥

तत्पूर्वतीर्थयानोऽपि तत्र भूसुरनन्दनः।
समवर्तत निर्व्यूढसर्वतीर्थावगाहनः॥ ४९॥
अथ वेदशिरोनिष्ठानपि तीर्थतटीजुषः।
अनङ्गीकृतकन्दर्पानपि सत्याञ्चितेक्षणान्॥ ५०॥
अपि माधुकरीं वृत्तिमञ्चतो भ्रमवर्जितान्।
अपि निःसामकारुण्यानक्षनिग्रहनिर्दयान्॥ ५१॥
शाम्यद्विपथसंचारानपि प्रव्रजनाश्रयान्।
राजहंससमारब्धसेवानप्यजडाशयान्॥ ५२॥
रुपमंहसि विद्यासु लोभमात्मनि रागिताम्।
अज्ञत्वमन्यनिन्दासु यतोऽपि जितषड्रिपून्॥ ५३॥
शर्वरीसमयारम्भानिव संभृततारकान्।
भीमसेनभुजाटोपानिव दण्डितकीचकान्॥ ५४॥
अनल्पभसितालेपविलसद्विग्रहाम्बुरुचीन्।
प्रावृट्प्रशमिताटाव्यान्वरहंसधुरंधरान्॥ ५५॥
असमुत्तम्भितप्राद्युनधौतविग्रहाग्रगनः।
अखातगम्भीरतरानहिमाक्रान्तशीतलान्॥ ५६॥
कदम्बमुकुलाकारैः कण्टकैरुपशोभितान्।
..........................................तैरिव॥ ५७॥
तत्र बुभ्रमन स्थाणूनवनीपावनाकृतीन्।
कर्मन्दिनः प्रणम्यैष गाहते स महोन्नतिम्॥ ५८॥
भृतकल्याणगुणानपि परकनकरनिलजोऽपि सर्वज्ञान्।
अपिना........................मग्नानपि महोरागीन्॥ ५९॥
शैवालापसमभान्भ्रमरहितान्प्रकृतिसमधुराजीवान्।
विमलान्तरङ्गवार्तोन्मासानिव पुण्यकासारान्॥ ६०॥

उन्मत्तपत्रपुष्पैरुत्पादितविभ्रमादनङ्गरिपोः ।
आदातुमीहमानानाहृतमानन्दमिव च सर्वस्वम् ॥ ६१ ॥
सकलागममधुदिवसान्श्रीकण्ठासक्तकंसवैरिभुजान् ।
नवभूतिश्रीदगृहान्पुरुषानभजत्परत्र सुधीः ॥ ६२ ॥
आर्यसेवी स निध्यातुमगादेकाम्रनायकम् ।
वर्धते सुकृतश्रद्धावार्धकं वरिवस्यताम् ॥ ६३ ॥

ततः क्रमेण समतिक्रम्य कतिचिदेव कक्ष्यान्तराणि साक्षादकृत । कृतकेतरावरः स्वयंवरवल्लभ इति श्रुतिपल्लवाधरागिः, अगदंकार इति भवरुजासङ्क्वाहिभिः, आहितुण्डिक इति कालकुण्डलिना, वाडवशिखीति पार····-महार्णवेन, कूटपाकल इति कुसुमेषुदन्तिना, पुरंदरायुधमिति जलंधराचलेन, करुणापयोधिरिति शरणाभिलाषिभिः, एकस्वभावमपि बहुधा विभावितम्, आत्मविवर्तजगदभ्यागारिकम्, अखिलविध्यण्डमण्डलीखण्डनवैतण्डिकम्, असिकरालकाकोलमुष्टिंधयमन्धकविलासिनीकपोलमकरिकाभरणपश्यतोहरम्, अहरहर्धनिनटनविभ्रमालंकर्मीणम्, अद्भुतगरिमकार्मणविविधकेलिनिर्माणम्, चलतमयानयनपरमानन्दनाडिंधमरूपधेयम्, आपीडपदनिवेशितसगरकुलभागधेयम्, असहायरसालतरविहारिणम्, आरग्वधमालभारिणं त्रिपुरवैरिणम्

विध्यादिविहितान्वेषं निध्याय महसां निधिम् ।
अद्रिकन्याकुचाभोगमुद्रितं मोदते स्म सः ॥ ६४ ॥

अभिवन्द्य तमखिलभुवनवन्दनीयचरणारविन्दमकृत्रिमवचःप्रशस्तापदानमस्तौषीत् ।

हन्त च्छन्दःपारिजातप्रभाजो माधन्मायामाक्षिकोत्सारपूर्वम् ।
यस्यास्वादं कर्तुमार्या यतन्ते माध्वीकं तद्भाति माकन्दमूले ॥ ६५ ॥
यस्यद्रिसुताद्दोषमूर्ध्नमपश्यदैलपदाधिकारदात्रीम् ।
पल्याङ्क निधेहि मूर्ध्नि कम्पां धृतया किं फलमभगङ्गया ते ॥ ६६ ॥
व्यर्थः पिधातुमजिनादिविरागचिह्नैः
सीवश्यतां त्रिपुरशासन ते श्रमोऽयम् ।

गात्रं तवैव कमनीयकुचाङ्कमसा
विख्यापने विजयडिण्डिमतां दधाति ॥ ६७ ॥
सत्यं जितोऽसि मदनेन यतः सकम्पं
काञ्चीपदे कलयसि स्थितिमङ्गजारे ।
साहाय्यनिर्वहणसस्पृहकामकोटिः
शक्तिः किलैकसहकारवतोऽभिपन्ने ॥ ६८ ॥
संपस्त्यै समिदुच्चयस्य परशुं भद्रं मरानीतये
पाकाय ज्वलनं जलाय तटिनीं पत्रोपक्लृप्त्यै वटम् ।
माकन्दं च फलाय मन्मथरिपो संगृह्णति स्वयम्भू-
स्कामाक्ष्या विकलेतरः परिकरो नित्याजविश्राणने ॥ ६९ ॥
भावना मे महादेव································ ।
नौस्तम्भलग्ना काकीव नान्यत्र लभते गतिम् ॥ ७० ॥

अपि च ।

भगवति संभावनया शिवया सह शीलिते भृशं भावनया ।
तदधिगमोदस्तस्य क्लेशासुतो भवेत्प्रमोदस्तस्य ॥ ७१ ॥
····देव्या पारेकम्पं क्ष····या दयास्पदे व्यापारे ।
परिचितमधिकाञ्चितया पद्यदलीकं भजेयमधिकाञ्चि तया ॥ ७२ ॥
वरमेकरसालपतिः श्रुतिरमुमेव स्फुटाधिकरसा लपति ।
वपुरसमा तारमतेः स्वीकृत्यामुष्य विश्वमाता रमते ॥ ७३ ॥
सुरभिरमाकन्दस्य स्फूर्जति मूले निविश्य माकन्दस्य ।
प्रमथेशो भाति शये भृतमृगपरशुर्जिताब्जशोभातिशये ॥ ७४ ॥
नाथशरीरं भायान्नगभुवि मृदितं नटत्परीरम्भायाम् ।
भीत्या कम्पारयतः द्रावयितुं भुवनगोलकं पारयतः ॥ ७५ ॥
परिचितवेदान्तानां प्रणिहितमनसामुमाधवे दान्तानाम् ।
अलघुभवाटव्यसनं विरचयतां केन्द्रवेशवाटव्यसनम् ॥ ७६ ॥
दक्षसभावस्कन्दे पट्टरवतु शिवो निरूढभावः स्कन्दे ।
स्त्री कृतकरणीयस्य स्मृतिमवचेतोविशल्यकरणी यस्य ॥ ७७ ॥

तमुपासे वासवतः परममरादपि च सारसे वासवतः।
अस्मितसारसनाभिं कमपि करासक्तकृष्णसारसनाभिम्॥ ७८॥
अतिरेकं दर्पस्य क्षपितमदक्ष्णा निजेन कन्दर्पस्य।
प्रशमितसम्भ्रमदेनः स्मरत ज्योतिर्हृदावसन्नमदेन॥ ७९॥
पृथुकटकैलासस्य प्रसवसुगन्धैः पतिः स कैलासस्य।
भाति भवानीकान्तस्त्रिपुरान्धकमुख्यदानवानीकान्तः॥ ८०॥
पटुरनुसार्य नटने समतां सिंहस्य रंहसा यन्नटने।
मां भजमानं दयतां पशुपतिरातङ्कभाजमानन्दयताम्॥ ८१॥
सरसिजधामादिशते पदजुषि विधां पृथग्विधामादिशते।
विभवे विप्रसवाय प्रणतिरियं ध्वस्तविधिजविप्रसवाय॥ ८२॥
अधिफणिहारमरालः पतिरवतु कृपासरोविहारमरालः।
अघतटिनीरच्छायं यं प्लवमेत्य तरन्ति गाङ्गनीरच्छायम्॥ ८३॥
वल्गदहिदाम वसानं त्वचमीडे देवदुर्हृदामवसानम्।
जगदतिसंधामायन्नलिनशरप्लोषलालसं धामायम्॥ ८४॥
पुरजेता मम नाथो रणदमितविपक्षराजमानसमुदयम्।
................................................................ ॥ ८५॥

मतिभृङ्गि महेशाङ्घ्रिसारसं दोहलालसे।
आश्रयानन्दमाध्वीकसारसंदोहलालसे॥ ८६॥
शंभोरवतु मामेकसहकारतलासिका।
ऋते गिरिभुवं तेन सह का रतलासिका॥ ८७॥
सोऽव्याद्बृहन्सुरोत्तंसमकरन्दरसं पदे।
दिशन्नरि ध्वजारूढमकरं दरसंपदे॥ ८८॥
वेदविदध्वान्तस्य व्यतिकरमबलादिसौहृदध्वान्तस्य।
प्रमदाम्भोजहितेन प्रत्ययरविणाम्बिकाविभो जहि तेन॥ ८९॥
तं भजे बुभुजे येन तरसा गरलं घनम्।
यत्नैः सुकरं भद्रेतरसागरलङ्घनम्॥ ९०॥

राजतेजा गरादी न सविता नयशोधन ।
राजते जागरादीन सवितानयशोधन ॥ ९१ ॥

उषित समया रसालसाल समुपासीदति या रसालसालम् ।
गिरिजा मुहुराहिताङ्कपालीप्रणय स्तौति गिरा हिता कपाली ॥ ९२ ॥

अद्वितीयाग्रमूलासिकालालस नृत्तलीलारसोल्लासिकालालसम् ।
मामकी दुर्मनोभावनागाहते श्रीगिरीश प्रिया भावना गाहते ॥ ९३ ॥

अमितविभव सर्वदैव तेषु त्रिजगति ते भव सर्वदैवतेषु ।
नतिरतिरसभावितायमानै स्फुटमिह धीरसभावितायमानै ॥ ९४ ॥

फणाभृति तवेश दोर्णवपटीरसाल्लासिका-
रते नटति कम्पितार्णवपटी रसा लासिका ।
सतीं प्रणयसपदा समधिकामनङ्गाहते
स्मरान्तक तवान्तर समधिकामन गाहते ॥ ९५ ॥

इह खलु तामरसाक्षीमयमामतनो स्वमानतामरसाक्षी ।
इयमनुकम्पालय ते नतिरीश नमस्ततोऽधिक पाल्यते ॥ ९६ ॥

गिरिश गभीर हस्तस्फुरदायुधमत्र केऽपि भीरहस्त ।
सविधिकरोटीक ते वपु स्मरन्तो जगद्गुरो टीकन्ते ॥ ९७ ॥

लघु फलमाशासानश्चरतु जनो नेदमाशुमाशा सा न ।
त्वयि शशिकोटीरमणे भक्ति याचेम कामकोटीरमणे ॥ ९८ ॥

प्रतिदिवस सारस्य प्रकटितविपरीतक्षिते ससारस्य(?) ।
इह सपदि व्याहार शिव इति हरतेऽधमस्तदिव्याहार ॥ ९९ ॥

अमित रसारम्भणत श्राव्य शिवनाम वेदसार भणत ।
सा-मम कालापनय स तु किल कल्याणसाधकालापनय ॥ १०० ॥

अविहितकृदकाण्डे दण्डितोऽभून्मनोभू
रकरुणमधुनेति स्पर्धमानेव गौरी ।
सकुचवलयमुद्राशालि गात्र पुरारे-
रकृत मदनजैत्रस्तम्भमेकाग्रमूले ॥ १०१ ॥

प्रणयकलहशान्त्यै पादमूले विनम्रा-
दभिचलति कपर्दोदभ्रगङ्गातरङ्गे ।
पुनरुपगतकम्पापूरमोहेन देव्या
दृढतरमुपगूढं ध्यायतैकाम्रनाथम् ॥ १०२ ॥

कुवलयदामकोमलवधूमयवामतनौ
भवतु भवे भवे मम भवेऽतिभवेऽभिरतिः ।
न तु भवने धने परिजने मदनेभमद-
प्रदचरितासु तासु वनितासु सुतादिषु वा ॥ १०३ ॥

काञ्चीनगर्यामालोक्य कामकोटेः किमुन्नतिम् ।
रुद्रकोटिमधिष्ठाय रोचते मदनान्तकः ॥ १०४ ॥

इति स्तुवन्हिमकरमौलिसंनिभैर्जगत्प्रसूचरणसमीपमभ्यगात् ।
अलिर्यथा नवहरिचन्दनान्तिकादुदञ्चितध्वनिरुपकल्पवल्लिकाम् ॥ १०५ ॥

अपिचैकभागमधिजग्मुषी विभोरतितृष्णयेव परभागमाश्रिता ।
स्तनयोर्मनोजवसतामुपेयुषी परदेवता पथि सुधी दृशोरभूत् ॥ १०६ ॥

असौ पुनरसदृक्षमतिपत्तिमेदुरः प्रणिपत्य मातरमवाङ्मनसगोचरगुणा-
मानिकुरचरणारविन्दमनुसंदधानो विस्मरानन्दवीचिरिदमवोचत ।

सर्वात्मना स्तवे तव जननि जगत्यां न मादृशो निपुणः ।
निवहोऽपि नित्यवाचां मागत्यागेन भणति यद्रूपम् ॥ १०७ ॥

शम्बरवैरिकृपाणी शैलतनूजे तवासिता वेणी ।
उन्मदयौवनकुञ्जरशुण्डालतिका शुभाय मे भूयात् ॥ १०८ ॥

जननि तव मौलिचन्द्रो भिन्द्यान्मम नहलमान्तरं तिमिरम् ।
वेणीविधुंतुदेन ग्रस्तमिवार्धं न दृश्यते यस्य ॥ १०९ ॥

कान्तिविरोधपापीतिं कलयितुमन्ते वसत्यपि मृगाङ्कः ।
महति न ते वदनरुचिं भवति हि भाग्यानुसारिणी सिद्धिः ॥ ११० ॥

वदनश्रियो विधात्रा विधृतस्य विधुच्छलातपत्रस्य ।
मृगमदतिलकमिषेण च्छायावलयं चकास्ति तव फाले ॥ १११ ॥

उत्तेजितः किमुत्पलबाणो मदनेन भालशाणेऽस्मिन् ।
भाति यदियं भवानि लक्ष्मरूपेण तद्रजोरेखा ॥ ११२ ॥
अधिकमसितोत्पलादपि धरणीधरपुत्रि तावकं नयनम् ।
कर्णाश्रयेण कान्तिमदाद्यं यत्तदतिपीडनेन परम् ॥ ११३ ॥
विषयमरुमार्गसीमाविभ्रमसंजातसंज्वरानस्मान् ।
अम्ब कृपारसपूरैरभिषिञ्चापाङ्गसारणीमुक्तैः ॥ ११४ ॥
निध्याय किं भवत्या नासाचाम्पेयमन्तरालगतम् ।
नयनमधुव्रतमिथुनं न कदापि मिथः समागमं भजते ॥ ११५ ॥
कान्तिसुधया करम्बितमाननचषकं तवाधिवासयितुम् ।
नासामणिच्छलेन न्यस्तं किमु मल्लिकामुकुलम् ॥ ११६ ॥
विरसा विद्रुमवल्ली तुल्या न भवेत्त्वदोष्ठबिम्बेन ।
यदमृतरोधनलोभादीशो धत्ते बहूनि वक्त्राणि ॥ ११७ ॥
अवतु तव स्मितकलिका शिखरिकुलाधीशकन्यके मातः ।
प्रणयकलहप्रसक्तिषु यदवधिरीशस्य भवति चाटूक्तिः ॥ ११८ ॥
सद्योपचितरसे वा सारे या कालकूटसोदर्ये ।
मधुरिमधियं विमुञ्चति गिरिशः प्रस्तौषि यदि गिरमपर्णे ॥ ११९ ॥
वितता भवत्कपोले विलसति ताटङ्कमौक्तिकच्छाया ।
अधिकतया श्रुतिगलिता हरचरितकथासुधारसझरीव ॥ १२० ॥
न नमय वदनसुधाकरममृतं निपतिष्यतीति सव्याजम् ।
गिरिशेन केलिकलहे मुहुरुन्नमितं नुमो भवच्चिबुकम् ॥ १२१ ॥
त्वत्कण्ठदत्तभङ्गः शङ्खो भीत्या समेत्य हरिदीशम् ।
भजते ततोऽपि मङ्क्षान्कापि न शर्मास्ति कुटिलहृदयानाम् ॥ १२२ ॥
कण्ठसमुदञ्चितं तव कलरुतमपहृत्य साम्प्रतं गिरिजे ।
प्रकटयति जनसमक्षं प्रायो हस्ताग्रताडिता वीणा ॥ १२३ ॥
नखरसुमनोल्लसत्करकिसलयमम्ब तव भुजलतायुगलम् ।
आलिङ्गति सहकारं निटिलदृगभिधानमिति किलौपयिकम् ॥ १२४ ॥

आर्तान्क्षुधा पदाम्बुजसक्तानस्मान्समीक्ष्य वात्सल्यात् ।
धृतया स्तन्यसमृद्ध्या भवति किमम्ब तव पीनता कुचयोः ॥ १२५ ॥
मुखचन्द्रामृतलहरी मुक्तादामच्छलात्क्षरन्ती ते ।
कुचगिरिमृगमदकलिला नाभिसरो विशति रोमराजिमिषात् ॥ १२६ ॥
ज्यारोपणाय मध्ये धनुषो निहितस्य मारवीरेण ।
अटनीनिपीडनोदितमवटं त्वन्नाभिरिति वदन्ति जनाः ॥ १२७ ॥
उच्छ्रायशालिनोर्भरमुरसिजयोः सोढुमप्रवीणतया ।
ताम्यति तथावलग्नं सदा न ह्यन्यसंपदल्पानाम् ॥ १२८ ॥
वसतो वृषाङ्कमीन्या भवदीयश्रोणिपर्वतनितम्बे ।
रशनामिषेण रक्षावरणो मदनस्य वर्तते मातः ॥ १२९ ॥
मन्ये त्वदूरुकाण्डौ मन्मथतारुण्यवारणेन्द्रकरौ ।
कथमिह घटतेऽपरथा कदलीस्तम्भामिषङ्गलम्पटता ॥ १३० ॥
समरव्यतिकरसमये पश्चाद्भवतो भृशं निषङ्गस्य ।
दर्पहरणेन तावज्जङ्घाकाण्डस्य जननि का श्लाघा ॥ १३१ ॥
संपल्लवास्त्वदङ्घ्रेः सक्ता वल्लीषु किसलयव्याजात् ।
यत्पल्लवा इतीदं नास्तो नामैकदेशतो ग्रहणम् ॥ १३२ ॥
प्रकृतिकठोरपदार्थलिरेषा नुतिरेव मत्समारम्भा ।
भवति भवदङ्घ्रिपल्लवशोणिमहेतुरिति शोभते वादः ॥ १३३ ॥
जननि त्वदङ्घ्रिचङ्क्रमलीलालेशापहारसंदेहात् ।
प्रायेण निगलबन्धं नरपतयः कारयन्ति नागानाम् ॥ १३४ ॥
श्रुतिशतशिरोविहारश्रमपरिखिन्नेव चरणरेणुस्ते ।
सुरवरशेखरसुमनोमकरन्दस्यन्दगाहनं तनुते ॥ १३५ ॥
असितकचमायतेक्षणमुल्लसितस्मितमुदारकुचभारम् ।
घनजघनमरुणचरणं कलये कामाक्षि तावकं रूपम् ॥ १३६ ॥

सुधाभजनविधायिनोऽपि सपदि समुदेति सौहित्ती न पुनरम्बागुणकदम्बामृतझरीनिषेवणधुरीणमानसस्य । पुनरपि भूसुरधुरंधरस्तदनुबन्धिनीमेव भारतीमभिधातुमारभत ।

कस्मिन्मुहूर्ते करपल्लवेन तवाददे काञ्चनदर्विकेयम् ।
यस्य प्रसादादयमिन्दुमौलिरैश्वर्यमव्याहतमम्ब भुङ्क्ते ॥ १३७ ॥
धामास्य कैलासगिरिः करस्थो हेमाचलस्त्वं दयिताऽन्नपूर्णा ।
धत्ते हरो भिक्षुकतां तथापि लुब्धः समागच्छति केन तृप्तिम् ॥ १३८ ॥
गिरीशहेरम्बकुमारवाहप्रस्ताविन्निष्टैरचलेन्द्रकन्ये ।
धान्यैरपि प्रस्थमितैः कथं वा जगत्त्रयीपोषणमातनोषि ॥ १३९ ॥
कम्पामपास्य प्रथितोद्गमानां चञ्चुपुटग्रस्तबिसाङ्कुराणाम् ।
उड्डीयमोघेन मरालिकानामाकर्ण्यमानामरणध्वनानि ॥ १४० ॥
मृदुप्रकृत्योर्मणिनिर्मितायां पदाब्जयोरर्पितयोः पदव्याम् ।
तद्विम्यदम्भाद्‍यमानधात्रीप्रारब्धपद्मास्तरणक्रियाणि ॥ १४१ ॥
कुचामृतास्वादकुतूहलेन हृतायकष्टांशुकपल्लवाभ्याम् ।
अभीष्टवस्त्वन्तरदानपूर्वमाख्यातसान्त्वानि कुमारकाभ्याम् ॥ १४२ ॥
अनुद्रवच्छेकमृगीनिवृत्त्यै वितन्वतो हुंकृतिमाननेन्दोः ।
साचीकृतप्रेङ्खितवेणिकास्तश्वासानिलाकृष्टमधुव्रतानि ॥ १४३ ॥
मध्याय मन्देतरकम्पशालिपयोधरद्वन्द्वभरार्दिताय ।
अनार्यशङ्काकुलितेन भर्त्रा प्रतिक्षणं प्रार्थितमङ्गलानि ॥ १४४ ॥
अचिन्त्यमानस्फटिकाङ्कणोर्वीपुष्पोपहारस्खलनव्यथानि ।
वेगोपयातानुचरीप्रणीतवेणीगलन्माल्यनिबन्धनानि ॥ १४५ ॥
अभीक्ष्णमक्ष्णोः श्रवणारविन्दपरागपर्याकुलभावभाजोः ।
प्रसादनाय प्रणयोत्तरङ्गं पिनाकिना दत्तमुखानिलानि ॥ १४६ ॥
अद्वैतचूतप्रसवासवेषु पदे पदे प्रस्तुतमञ्जनाभिः ।
कम्पातरङ्गानिलकन्दलीभिराचान्तघर्माम्बुकणावलीनि ॥ १४७ ॥
सजक्षमभ्यागतमण्डलाय प्रत्यग्रमर्घं प्रतिपादयन्त्याः ।
आ मण्डपादा च महानसात्ते कामाक्षि नः पान्तु गतागतानि ॥१४८॥
किं च ।
मध्ये नीपवनस्य प्रचलद्गीर्वाणतरुवनीपवनस्य ।
शीलितमोहनगानां जननीं भज भञ्जनाय मोहनगानाम् ॥ १४९ ॥

पुरहरगिरिजातरसा चेतसि येषां चकास्ति गिरिजा तरसा ।
अतिसरसं पद्यं ते रचयन्ति यशांसि तेषु संपद्यन्ते ॥ १५० ॥
इत्थमुपनीताम्रतरावभिके सक्ता जपावनी ताम्रतरा ।
मामिह पाकं पायान्नियतविधि तन्वती कृपा कम्पायाम् ॥ १५१ ॥

बहुशो भाविता नासाशिखरन्यस्तलोचनैः ।
बहुशोभाविताना सा भवानी परिपातु नः ॥ १५२ ॥
घनसारसगन्धेन वदनेन स्मितेन च ।
घनसारसगन्धेन ललितां ललितां भजे ॥ १५३ ॥
अपत्यमगराजस्य भजमानसभाजनम् ।
चन्द्रशेखरचाह्नानां भज मानस भाजनम् ॥ १५४ ॥
कलत्रमीशं दम्भासा सम्नतामरसं सदा ।
सेवे श्रितं पदोपान्तसंनतामरसंसदा ॥ १५५ ॥
घातोऽसि देव्या बन्धूककलिकोपमदेहया ।
गङ्गाधरे कृतप्रेम कलिकोपमदेहया ॥ १५६ ॥
जनन्या गिरिशोद्दामोत्कलिकालसमानया ।
वयं धन्या वतंसेन्दुकलिकालसमानया ॥ १५७ ॥
अम्बा तपोवनीभूतकम्पाकान्तारमालिका ।
सेव्या शिवस्मृतौ वीतकम्पा कान्ता रमालिका ॥ १५८ ॥
शिवा स्पृहावती कम्पावाहिनीपवनालये ।
भासते सुमनोभारवाहिनीपवनालये ॥ १५९ ॥
काशते वलयाङ्कस्य कमनी यतमानसा ।
कान्तिसौभाग्यशीलैः किं कमनीयतमा न सा ॥ १६० ॥
समरच्छिन्नदैतेयसारवद्विपदन्तया ।
देव्या जिनं कृतोपास्तिसारवद्विपदन्तया ॥ १६१ ॥
अत्र गौर्या सदाराध्ययागवासरसार्थया ।
भूयते गीयते लोके या गवा सरसार्थया ॥ १६२ ॥

भजतः स्युरिमां विद्यां काञ्चीदा मोदराशयः ।
साधु जानाति यान्मातः काञ्चीदामोदराशयः ॥ १६३ ॥
धत्ते मुदा श्रियं गौरी तामसीमदमन्थरा ।
अस्याश्च प्रकृतिर्दूरे तामसी मदमन्थरा ॥ १६४ ॥
कलयामीन्दुकलया भूषितां तटभूषिताम् ।
कम्पायाः सोर्मि कम्पाया देवतां शश्वदेव ताम् ॥ १६५ ॥
कुन्दराजन्नवरदा वरदानविशारदा ।
शारदाविनुता पातु तापातुरमिमं शिवा ॥ १६६ ॥
जननी जनभीतीनां गिरिजा गिरिं जाग्रती ।
महता महताटोपं तनुतां तनुतां शुचः ॥ १६७ ॥
रमणीयतमा शंभुरमणीयमुपासिता ।
कम्पातीरं गता नाभेः कं पातीरंमदाधिकात् ॥ १६८ ॥
धरा धरार्तिकृत्पयोधराधरास्तपल्लवा ।
परा परापनीतितत्परा पराकरोत्यघम् ॥ १६९ ॥
अमेयविभवे भवे सहृदया दयाघनमना मनाक्समजने ।
जने धृतसुमा समाधिसुगमागमालिमहिता हितास्ति जननी ॥ १७० ॥
रयशालिकुचा लिकुचापजये वचसैव सुधा वसुधाधरभूः ।
कलसारसना रसना भुवि मे तनुतां नटनं नटनर्मसखी ॥ १७१ ॥
मुदितामुदितारुणबिम्बनिभामगजामगजानुविधेयगतिम् ।
अधिकाञ्चि घनामवने भवने रतिभाजमिहाकलये कलये ॥ १७२ ॥
महितया हितया जगतां त्रयीपथिकपालिकपालिजुषा मयि ।
करुणयारुणया क्रियतां नमत्सुरसवीक्षणवीक्षणनाटिका ॥ १७३ ॥
आर्तिभागधनदानवासनाशालिनी जनितदानवासना ।
तादृशी जयति तापसी मया सेविता क्षतिरतापसीमया ॥ १७४ ॥
श्रये महस्तरुणिमसंपदा मनाक्सदारुणं हृदि वशिनामदारुणम् ।
तनुप्रभाततिपरिभूतनिर्दलज्जपायनं विनतसमाजपावनम् ॥ १७५ ॥

शिवयागमेषु लसमानवार्तया निजशीलवागलसमानवार्तया ।
स्वगुणोदयस्सकलभावलीलया जगती कृतारिकलभावलीलया १७६
सेवन्ते नतिमिह हारमालिकायै शर्वस्य स्तनधृतहारमालिकायै ।
तारल्यप्रकटिततादृशान्तरङ्गा वागीशादिमवनिता दृशां तरङ्गाः १७७
हितोपसंपन्नवनीपकानना वितापसंपन्नवनीपकानना ।
श्रिता भवानी तरसा लसन्निधौ सदा भवानीतरसालसंनिधौ १७८
अव्याजनिर्मलतरैर्नखरांशुपूरैः कम्पानदीप्रमदभिन्नगजेशयानाम् ।
कर्मीकरोति मनसा भवतीमिदं मे कं पानदीप्रमदभिन्नगजे शयानाम् १७९
सहेतिमस्तच्छविपल्लवेषु शयेषु लूनाच्छविपल्लवेषु ।
त्वामम्ब सिन्दूरविभासमानां ध्यायन्ति मध्येरवि भासमानाम् ॥१८०॥
सति सरहरन्यस्तायतगानसभावने ।
पाहि मामजहत्सेवायतमानसभावने ॥ १८१ ॥
अम्ब यस्य भवल्लास्यकलनादरसंभवः ।
स वेद तव संगीतकलनादरसं भवः ॥ १८२ ॥
अधिमस्तकभेशेन सह सारसमध्यगाम् ।
अम्बिके भवतीं पश्यन्सहसा रसमध्यगाम् ॥ १८३ ॥
त्वत्कृपा भुवने पुंसां कामाक्षि करसाधिका ।
त्वां विनानन्दलहरी का माक्षिकरसाधिका ॥ १८४ ॥
करोषि देवि दानैस्ते करवैभवनाटनम् ।
कदा ते किंकरीभूय करवै भवनाटनम् ॥ १८५ ॥
नाके वलन्ते नादान्तमनसः परमेश्वरि ।
ना केवलं ते नादान्तदीपिकायास्तु चिन्तकः ॥ १८६ ॥
भगवति कामाक्षि पतिप्रणयिनि भजते श्रियं न कामाक्षिपति ।
तव हि कटाक्षतरङ्गः करुणोर्मिनटीविशङ्कटाक्षतरङ्गः ॥ १८७ ॥
स्थितिमधिकं पारम्ये कलयसि मातः स्थले च कम्पारम्ये ।
सिध्यति तव पद्वीक्षणतः सिध्यति पुंसामजादिपद्वीक्षणतः॥१८८॥

जगदुदयस्थेमहतीः कर्तुं काञ्चीपुरालयस्थे महतीः ।
अतुलं चारित्रेऽधा रूपं निगमान्तसौधचारि त्रेधा ॥ १८९ ॥
द्विपति पुरामारभसे रूपगधिमौलि धृतजलधिरामारभसे ।
त्वमिव परा का रमिता तस्य शिवे दक्षिणेतराकारमिता ॥ १९० ॥
इह पिबतः स्तन्यं ते कस्य न वाचः सुधाभृतस्तन्यन्ते ।
अम्ब तदाशु भवत्या प्रदीयतामस्य सर्वदा शुभवत्या ॥ १९१ ॥
शुभमनसा कमनेन शुपतिसुताया गुहेन साकमनेन ।
स्तनरसदायजुषो मे समयं गमय स्तुते सदा यजुषोमे ॥ १९२ ॥
कार्या देवि चिकित्सा कुक्षिरुजः का दयापदे विचिकित्सा ।
स्तन्यरसायनमस्ते तमसि प्रदिशाङ्घ्रिसारसाय नमस्ते ॥ १९३ ॥
चिदुदधिराकारजने त्रिभुवनमातः कृतसराकारजने ।
तव नुतिवाचा रचये प्रपदनमजहत्प्रियोत्सवाचारचये ॥ १९४ ॥
अञ्चितशंकरपाणि त्वत्पदसेवां दिवानिशं करवाणि ।
मम न गिराजनि योगं वद वचनं ते वदन्ति राजनियोगम् ॥१९५॥
श्रितपतिमानसदेशे शश्वत्काश्यां भवद्भिमानसदेशे ।
भवतु शिवा सानुमति क्षिग्भे तव देवि मन्निवासानुमतिः ॥ १९६ ॥
इति विनिहितबुद्धिरीश्वरायां भवनमिवाद्रिपतेरसावयासीत् ।
निजहृदयनिरूढकामकोटे रुचिततरा वरदोपकण्ठयात्रा ॥ १९७ ॥
पार्श्वयुग्मगता यस्य प्रसूते गोपुरद्वयी ।
अन्तरस्थितशैलेभबन्धनस्तम्भविभ्रमम् ॥ १९८ ॥
कथं मनोविस्मयकारि तद्भवेदनन्तरं तत्र यदग्रणीः सताम् ।
समाहितानन्तसरोवगाहनः पुण्यकोट्या लभते स संनिधिम् १९९

अथ सुमतिरयमधिरूढशिखरिकूटभागमवलोकयति स विस्मयवि- धायि विनयगौरवावर्जिताभिरापगावेगसङ्गिवेतसविडम्बिनीभिरुत्तमाङ्गप- रंपराभिरन्योन्यनमनकर्माणि निर्मिमाणैरापाण्डरोर्ध्वपुण्ड्रमरीचिनिबिडश- रीरतया श्वेतद्वीपविहरणोचितं परिणतिविशेषमिव गाहमानैः सत्वसमृ- द्धिमन्तरमान्तीं बहिरिव विभावयद्भिरतिवेलक्षोभजलधिपूरावगाहमिलित-

मिव वहलफेनपटलमाविभ्राणैरधिकण्ठमाशये च नलिनाक्षगुणमण्डितैः सारसविहंगमैरिव समाचर्यमाणलक्ष्मणाभिमतैः कमलाकरैरिव कमनीय-जलजचक्राङ्कशालिभिरम्बरकुटुम्बिभिरिव प्रकटामृताभिलाषैरञ्जलिसनाथ-मौलिभिरस्तोकविस्मयरसप्रथैः परमभागवतसूरिभिराराध्यमानसेवानुवृत्तिप्र-णयपार्श्वस्थितपरिजनकरावलम्बितैरनवरतविजृम्भमाणपतनोत्पतनकर्मभिर-लघुनिर्मलांशुडामरैश्चामरैः स्वकरुणारससुधापयोधिवीचिनिचयैरिव समा-चरितविजनोपचारमनधिगतवेपथुभिरपनिमेषचापलमात्मीयरूपसंपदमनुभव-द्भिरिव दीपिकामरोहैरवभासितभूषणप्रपञ्चं काञ्चीमध्यमण्डलमाखण्ड-लनीलमिव लक्ष्यमाणमेकेन पाणिना धारणविरोधियादोनिषूदनाय पत्याहमविनियुक्तेति कन्दलितादिव मन्दाक्षभरादधोमुखी कौमोदकी-मवष्टभ्य तिष्ठन्तमिदमेव मदावलभयविदारणमित्यमयमुद्रानुबन्धिना क-रान्तरेण सुदर्शनमिव प्रदर्शयन्तं शुण्डालवरनिवेदितं पुण्डरीकमुकुलमिव समर्चितं पाञ्चजन्यमापाटलाङ्गुलीदलशोभावगुण्ठितमखिरखण्डितप्राहरु-धिराङ्कमिव रथाङ्गमपि हस्तारविन्दयुगलेन संदधानमध्युषितनिकषमध्यामपि कनकरेखामलंकृतगगनाङ्गणामपि तरुणारुणकिरणधोरणीमभ्युदक्तावल-म्बामपि शम्पालतामधिक्षिपन्त्या वक्षोनिविष्टया लक्ष्म्या समाश्लिष्टपुष-मभिनवबन्धूकरोचिषि दन्तवाससि चन्द्रिकाशकलपेशलं स्वीकृतवपै-कदेशमिव हसितलेशमुद्वहन्तं पुन्नागमपि भुवनमण्डलीतिलकं पूत-चारित्रमपि भुजङ्गभोगभुजं हरिमपि प्रथमानकरिहार्दगरिमाणमसमान-महिमशेवधिं निरवधिविभूतिमनिमेषपतिम् ।

अङ्गत्विषामञ्जनमेचकानां व्याजेन विस्तारयति स्फुटं यः ।
कठोरवक्षःस्थलकेलिभाजो लक्ष्म्या नवेन्दीवरपत्रशय्याम् ॥ २०० ॥

वेदाकरा नीलमणेस्त्रिलोकीविभूषणानामपि भूषणस्य ।
अलंक्रिया यस्य किरीटमुख्यैरनुग्रहः केवलमेव तेषाम् ॥ २०१ ॥

आपादचूडाभरणेषु लक्ष्मीराभाति यस्य प्रतिबिम्बिताङ्गी ।
आक्रम्य दृग्मध्यमपूर्णकामा समश्नुवानेव तनुं समस्ताम् ॥ २०२ ॥

यद्भूषणेषु हरिनीलमलीमसेव
मुक्ताफलाम्भसि निमज्जति दृग्रमायाः ।
शोणोपलातपमुपैति जडीकृतेव
तसैव याति हरिदश्मतमालवीथीम् ॥ २०३ ॥
यस्कौस्तुभप्रतिभटोपलसंग्रहेच्छु-
रुद्धृत्य पूर्वजलधेर्मणिमम्बरस्य ।
नक्तंदिवस्फुरणहीनममुं विचिन्त्य
वेधा निरस्यति मुहुश्चरमाम्बुराशौ ॥ २०४ ॥
स्वबिम्बमन्तर्मणिराजमीक्ष्य जायान्तराशङ्किहृदः प्रियायाः ।
क्षणं समुद्घटितकिलिकिञ्चितानां यः पात्रतामेति दृगञ्चलानाम् ॥ २०५ ॥
उद्दामबाहुभरमुद्धृतकण्टकस्य
यस्योपधाय सुखसुप्तिजुषस्त्रिलोक्याः ।
क्षौमोत्तरीयमिव निःश्वसितप्रणुन्न-
मारते महश्चटुलमङ्गदमौक्तिकानाम् ॥ २०६ ॥
यस्य वरदस्य हस्तो रंहस्तो हृतपराग्रहस्तोमः ।
कटकं बिभर्ति मानोत्कटकङ्कमुखीविनोदसघटकम् ॥ २०७ ॥
शावककृष्टिपुरोगतिजगदभयत्यागदृष्टकौशलयोः ।
सव्यापसव्यकरयोर्घटते मणिकङ्कणार्पणं यस्य ॥ २०८ ॥
अन्तर्बहिरपि शुचयः कटकजुषो यस्य वृत्तकमनीयाः ।
दृद्गतपरस्वरूपा मुक्तामणयो विभान्ति मुनय इव ॥ २०९ ॥
कटककुरुविन्दकान्तिस्थगितान्मणिदाममण्डलाद्यस्य ।
करपल्लवः क्षणार्धे हारग्रहणाय हन्त संदिग्धे ॥ २१० ॥
सरसि विहृत्य वधूभिः संतरतो यस्य निर्जरेभस्य ।
कटकहरिन्मणिकान्तिः सृजति कराकृष्टकमलिनीशङ्काम् ॥ २११ ॥
मध्येरणं कटकमौक्तिकधामगौरो
यन्नन्दकः परिपतन्नरिकन्धरासु ।

वैमानिकायतदृशां वरणागतानां
सूते वरार्पितसुरद्रुममाल्यशङ्काम् ॥ २१२ ॥

रणे बलाकृष्टसुरारिलक्ष्मीवेणीव सा दीव्यति यत्कृपाणी ।
तद्वान्तजातीकुसुमानुकारं तन्वन्ति यत्कङ्कणमौक्तिकानि ॥ २१३ ॥

यद्दिव्याभरणोच्चयस्य महिमश्लाघाविधाने तथा
हर्षोत्कम्पयते फणादशशतीमाशीविषग्रामणीः ।
पर्यस्येत यथा धृतश्चिरमदः प्रत्युप्तरत्नाङ्कुर-
प्रौढालोकनिरर्थकीकृतमणीवृन्दातिभारश्रमः ॥ २१४ ॥

तदनु तदनुशासनाय विनयोपहृतमौल्यानतिरसौ कल्याणिनेयः कौतुक-विकसितेक्षणो नवनवाक्षराणि कतिचिदेवमस्राक्षीत् ।

काचिन्नीला भासा करुणा विकसद्भावनीलाभा सा ।
कृतरचनान्नायततेः स्थितये लोकस्य वरदनाम्ना यतते ॥ २१५ ॥
स्फुरदपदानवलोऽपः सिन्धोरवगाह्य कृतसदानवलोपः ।
नितरामायामी नः श्रियमनवद्यां तनोतु मायामीनः ॥ २१६ ॥
अरिजलजगदाधारं दूरं वचसामशेषजगदाधारम् ।
स्वीकृतकच्छपदेहं सेवेऽहं (तं) कृताङ्घ्रिकच्छपदेहम् ॥ २१७ ॥
बाहुषु सुरसालाभः प्रलयजलान्तःप्रणीतसुरसालाभः ।
किटिरुरुनासावंशः पूर्णो भावः परस्य नासावंशः ॥ २१८ ॥
अघमभितापं चास्यत्वमतां चक्रेण भास्वता पद्मास्यम् ।
सुजदरिवक्षो दमितं भजत महस्तदसुगमिनवक्षोदमितम् ॥२१९॥
निजपदराजीवेन न्यकृतदैतेयशेखराजीवेन ।
कलितमहामहिमानः कल्पयतां शर्म घनमहा महिमा नः ॥२२०॥
विरचितपरशुभरणया त्रिसप्तवारावनीपरशुभरणया ।
संहृतकृतवीर्यजया श्रीपतिकलया भवाम कृतवीर्यजयाः ॥ २२१ ॥
पशुपतिचापलतायाः पाटयिता जयति पदमचापलतायाः ।
यः किल साकेतपतिः स्वयमटवीमाप पितरि साके तपति॥२२२॥

आदृतहालाहलया हृतमुष्टिकमुख्यदुष्टहालाहलया।
श्रयत हरिज्यायस्या श्रेयःकलया सशक्तिरिज्या यस्याः॥ २२३॥
धाम्नो वंशस्तस्य प्रकाशतां विप्रदारवं शस्तस्य।
अतिसुकुमारमयन्तं मधुमयतां गोपसतितमा रमयन्तम्॥ २२४॥
मुरलीं वादयमाना मोदं पशुपालनोत्सवादयमाना।
सदृशी तापिञ्छेन स्फुरति कृपा शिरसि भूपिता पिञ्छेन॥२२५॥
हरिमभिजातोदन्तं वन्दे कृतबाणबहुभुजातोदं तम्।
वक्षसि परमा यस्य क्रीडति लक्ष्मीरफेडपरमायस्य॥ २२६॥
अधिगतकल्यन्तेषु म्लेच्छेषु सृजत्सु वृषमकल्यं तेषु।
नटितभुजातरवारि ज्योतिरुपासे भयोपजातरवारि॥ २२७॥
सार्थयन्वरदाभिख्यां साधून्पुष्यत्ययं वरैः।
सत्यमताधिका........................................॥ २२८॥
क्रन्दति करुणमिभेन्द्रे क्व वैनतेयः क्व वैनतेय इति।
उच्चया सह फणिशयनादुच्चलतस्ते स पातु संरम्भः॥ २२९॥
श्रीचाटुवाणीश्रवणान्तरेऽपि गर्जैव भेजे करिणः श्रुतिं ते।
आपन्नरक्षाध्वरदीक्षितानां पुंसां न भोगाभिनिवेशयोगः॥२३०॥
मधुपानुबन्धमनिशं मदान्धतां रसनाविपर्ययसनमप्यचिन्तयन्।
अतिभक्तिमेव करिणस्त्वमग्रहीर्गुण....ता खलु गुणो महीयसाम् २३१
रमेश कारुण्यरसाम्बुराशेः समुज्जिहानो भवतः सवेगम्।
चक्रारुणो नक्रतमिस्रहारी बभार पद्मिन्यनुकूलभावम्॥ २३२॥
भवत्सायुज्यलाभेऽपि भवादतिशयान्तरम्।
भजते स न वेतण्डो भवत्सुखैकसंश्रयः॥ २३३॥
यस्ते कटाक्षविधिरार्तिमिते गजेन्द्रे
यश्चास्य पीडनविधायिनि शिंशुमारे।
तच्चादृशोर्वरदराज तयोरिदानी-
माद्यं निधेहि मयि मद्वृजिने द्वितीयम्॥ २३४॥

अजाश्वमेधाध्वरकल्पशाखिनः पचेलिमं तत्फलमच्युताकृति ।
अहो बताभिष्टुवतोऽपि सौहिती मनीषिणां मौलिमणेरवर्धत ॥ २३५ ॥

इति समरपुंगवस्य कृतौ चम्पूकाव्ये तृतीय आश्वासः ।

---

चतुर्थ आश्वासः ।

अन्तर्योणिरसौ गेहमरुणस्तु नभोन्तरम् ।
तौ विष्णुपदसंसेवातत्परौ लब्धुमैच्छताम् ॥ १ ॥

तथा हि । तरलतलकान्तिसंपद्विडम्बितजाम्बूनदकुम्भमम्भोजसचिव-बिम्बमम्बरसौधशिखरमालम्बत ।

मुक्तारुचो मूर्धनि हर्म्यकेलोरासक्तमम्भोरुहबन्धुबिम्बम् ।
तस्याः पुरोऽराजत दण्डशालि हिरण्मयच्छत्रमिवाबभासे ॥ २ ॥

मादुर्भूतं प्राग्दिशा विप्रयोगादाविश्राणो हन्त संतापभारम् ।
काले तस्मिन्कामुकः पद्मिनीनामन्वैर्भेजे दुर्निरीक्ष्यामवस्थाम् ॥ ३ ॥

भूत्वा मृदुः पुरा पश्चात्तीव्रो याति दिनेश्वरः ।
प्रायो वसुसमृद्धानां प्रकृतिः किल भिद्यते ॥ ४ ॥

अपहृत्य कुलान्यभीशुमाली जगदन्धंकरणानि शार्वराणाम् ।
प्रकटीक्रियमाणभीममावः प्रतिपेदे परदुःसहं प्रतापम् ॥ ५ ॥

विभज्य विश्वंभरया नदीभिराशागणैरप्यनुभूयमानः ।
जज्ञे वियत्प्रान्तरयानजन्मा तापातिरेकस्तरणेरसह्यः ॥ ६ ॥

उपगच्छति येन साकमुच्चैरुदया(द्वौ) जगदुष्णधाम्नि तस्मिन् ।
अखिलात्मनि तापमश्नुवाने तदभूत्तमिहास्ति किं विचित्रम् ॥ ७ ॥

अहह ततिरशेषदेहभाजामपि पुरतः क्षितिमीक्षितुं तदानीम् ।
अभजत भृशमक्षमामवस्थां त्रिभुवनचक्षुषि दर्शितप्रकोपे ॥ ८ ॥

निरतिशयतापनिर्वापणायेव कमलकुवलयकह्लारविपिनानि किमपि परि-मम्र्द तरणिकरनिकरः । किमुत बहुदूरसरणिसंचरणारचितसंज्वरघनाः पथजनाः । तत्क्षणं च नगरमक्षान्तमिहिरसंतापतया सेव्यमानकदलीगृहान्त-रमभिनन्द्यमानशशिकान्तमणिवेदिकमधिरुह्यमाणसरसकुसुमास्तरणमभ्यस्य-

मानकर्पूरालेपनमारभ्यमाणधारागृहासिकमासाद्यमानकासारखेलनमुद्राव्यमानगन्धोदकयन्त्रशीकरासारमुद्धूयमानलामज्जकन्यजनमुपयुज्यमाननवनालिकेरसलिलपरिचीयमानपाटीरपङ्कमेदुरवधूटीकुचाचलमजायत ।

कुचमण्डलमालिलिङ्ग कण्ठं जगृहे वक्त्रसरोरुहं चुचुम्बे ।
स्पृशति स्म नितम्बमारुरोह प्रमदानां जघनं श्रमाम्बुपूरः ॥ ९ ॥
तालवृन्तपवनादभिकानामुत्तरीयमरुदब्जमुखीनाम् ।
प्रीतयेऽजनि ततोऽपि विसर्पन्वक्त्रसीमनि तदास्यसमीरः ॥ १० ॥
पयोधरोत्सारितकञ्चुकानां प्रासादवातायनसेविनीनाम् ।
स्त्रीणां जहार श्रममब्जगन्धी सशीकरो वेगवतीसमीरः ॥ ११ ॥
वीचीकणैः पौरविलासिनीनां व्यत्यस्तवक्त्रश्रमवारिलेशः ।
स्वसौरभक्रीतशिरोजगन्धः क्षीरापगागन्धवहश्चचार ॥ १२ ॥
प्रतिसौधगवाक्षलक्षितप्रमदावक्त्रशता पुरी बभौ ।
मिहिरज्वरवारणोदयन्मृगलक्ष्मावलिभूषितेव सा ॥ १३ ॥

तदनु निर्गत्य सरोजनेत्रसदनादतनुशासनसमाराधनाय नवकुसुमनिचयमवचिचीषुरयमवतरति स्म विविधतरुकोटरक्रोडपरिक्रीडमानचिक्रोडपतनदलितनालिकेरफलपरिग्रहव्यग्रप्लवकपरिषदारभ्यमाणनियुद्धकोलाहलं विटपितलनिषण्णविटजनोत्सङ्गनिद्राणपुष्पलावीपरिष्कृतं दिवसकरभीतशीतलतानिरातङ्कवसतिं गजतुरङ्गसंदोहमन्दुरां चारुतरवीरुत्तटिनीनिबद्धनर्तनानर्तमहीं प्रमदोपगूढमिव मन्मथारूढहृदयं बहिरिद्धकण्ठकं च विन्ध्यमिव नमेरुविरचितामोदं व्याप्तनभस्थलं च पथिकशरीरमिव प्रियालोपहृतशोभं प्रत्यग्रलोध्रपाण्डुरं च पतिंवरापरिगृहीतमिव भासुरमधूकमालिकाभूषितं प्रथमानमङ्गलं च राशिमण्डलमिव मन्दारमण्डितपुष्पवदलंकृतं च स्वर्लोकराज्यमिव सहस्राक्षसमन्वितं संभावितरम्भाविलासं च पार्थिवसदनमिव पृथुलसालवलयितं कोशपरिपूरितं च दैत्यारिरूपमिव गरुडश्रियाश्रितं धात्रीनिषेवितं च मज्जनशीलमिव समधिकद्विजपक्षपातमाश्रितसंतापदरं च वसुफीवाधमिव रुचिरप्रवालशोभितमभिरूप्यककुभं च फणिराजशयनमिव

१ वीरुत्तरिमृगविशेषः ।

कृष्णलाभासितं सदाभोगसहितं च गणिकासनाथमपि विमलस्वभावमविरत-जपानुबन्धमपि बहुतरारिष्टं जातिविशिष्टमपि नकुलचरितान्वितं सरलोदित-च्छायमपि कुरवकसमग्रं सुकवीरशोभास्पदमपि साध्वसहृगन्तरं प्रकटित-स्पर्शनमपि नवनीपकाभिराममुत्फुल्लचिरिबिल्वमुल्लासहरितमल्लिकमुन्निद्रपुन्ना-गमुन्मुद्रणातिमुक्तमुद्भिन्नकर्णिकारमुन्मेषशोभिकेसरमुज्जृम्भमाणचम्पकमुद्वि-कासवासन्तिकमभिजातहसितकेतकमारब्धविदलनारग्वधमतितप्तमुचुकुन्दमा-वृन्तविकचमाकन्दमाकलितजागराशोकमवबोधशालिनवमालिकं निखिलज-ननयननिर्माणफलमुन्मीलयता तारतम्यातिशयेन खाण्डवमपि निर्कपताण्ड-वस्य वृन्दावनमपि मन्दाक्षसंपदो नन्दनमपि भूरिनिन्दनविधेरशोकवनिका-मपि निराकरणकर्मणो मधुवनमपि पृथुतृणावतरणस्य चैत्ररथमपि महात्रास-परिणतेः पात्रीकुर्वाणमलिपटलजेगीयमानसरसर्तुसाधिमास्पदं परभृतकदम्ब-पाठ्यमानपञ्चशरविरुदमपञ्चं शुकशारिकानिकरजोघुष्यमाणपुराणपुरुषहृद्या-वदानमुद्यानम् ।

पिकनिनदमयीं नयन्मियोक्तिं प्रसवरसप्रमदाश्रुबिन्दुवर्षी ।
उपवनपवनस्तदाभिधावन्परिरभते स्म तमानतं सगन्धः ॥ १४ ॥

तत्र पुनरश्रमयानशेषसुमनोविकासहेतुरसौ वसन्त इव समन्ततो विटपिवा-टीषु पर्यटन्भयितत्र्यशिवपदाम्बुजसंपर्कबहुमानसंमदादिव विस्मयमानमभिजा-तकुसुममाददानो जयविशिखसंग्रहणशीलमकराङ्कविलासभूयिष्ठतनुरिदमाचष्ट।

मधुमतक्षोदसहं मदीयः सदोपभोगेऽपि ससौरभीकम् ।
पुष्पं प्रसूते भुवि कस्तरूणामग्रेसरं केसरमन्तरेण ॥ १५ ॥

संदष्टा किमु कापि हानिरियता चाम्पेयलोलम्बयो-
रस्त्राक्षीत्र परस्परं यदुभयोरम्भोजमूः सौहृदम् ।
क्ष्मापालैरुपलाल्यते न शिरसा किं चाम्पकः कोरको
भृङ्गः किं कमलाकरेषु न मुहुः प्राप्नोति लीलासिकाम् ॥ १६ ॥

ललिता त्वं ····लतावल्लीषु जाते सुकुमारः समयेषु माधवोऽपि ।
प्रणयेयदि संगतिं भवत्या स भवेत्सर्वगुणाकरस्तदानीम् ॥ १७ ॥

हे कर्णिकार मुहुरीश्वरवल्लभत्वं
संतप्तहेमसमता च तनोति हृद्यम् ।
आमोदभारमहिमानसलोभनीय-
माविष्करोषि न यदत्र परं व्यथा मे ॥ १८ ॥

भजतश्चपलोदये विकासं रजसा दूषयति स्वसेविनोऽपि ।
प्रमथेशपदार्चने निषेधो भवतः केतक युक्तमेव मन्ये ॥ १९ ॥

कर्पूरस्य पदे चिताग्निभसितं क्षौमस्य नागत्वचं
प्रासादस्य परेतभूमिमुरगं प्रत्यग्रमुक्तावलेः ।
दिव्याहारभरस्य किंच गरलं देवेन संतन्वता
स्थाने काञ्चन पारिजातकुसुम स्थाने भवद्धारणम् ॥ २० ॥

प्रमथाधिपार्चनार्थे बिल्व भवत्पत्रभङ्गरचनैव ।
मूलमनघेन पुंसा मुक्तिवधूपत्रभङ्गरचनायाम् ॥ २१ ॥

श्रीखण्डसालजगतीविदितानुभाव
तत्तादृशीं सहनतां तव किं वदामः ।
कामं यतः कठिनदारणदार्यमाण-
देहोऽपि गन्धनिवहेन जनान्धिनोषि ॥ २२ ॥

पौष्पैः कल्पयसे रसैर्मधुलिहां वृन्दस्य संतर्पणं
छायासंपदमातनोषि जनतासंतापनिर्वापिकाम् ।
पुष्णासि स्वयमङ्कुरैः शुभगिरां पुंस्कोकिलानां कुलं
धान्यामत्र तवैव चूतविटपिन्धन्या महाभ्युन्नतिः ॥ २३ ॥

उद्यानादथ मज्जनाय सुमना मध्याह्नहृद्येतर-
च्छायानायकसंज्वरप्रशमनोपायादुपायात्सरः ।
पाथोजावलिशीधुहृष्टमधुपव्रातप्रणादक्रिया-
संगीतोपरनृत्तकौशलमिलद्भृङ्गालि रङ्गस्थलम् ॥ २४ ॥

अधिगत्य च कासारमयमित्यभाषत ।
नीरजानि जलनीलिकाभरैः साकमेव सततं बकैः सह ।
मण्डलीमपि च मानसौकसां पुष्यति स्फुटमसौ जलाशयः ॥ २५ ॥

ग्राहाब्जिनीकण्टकपङ्कराशीनन्तर्दुरन्तानपि संदधानः ।
बहिर्गतैरम्बुजराजहंसैर्वधाति विस्रम्भमयं तटाकः ॥ २६ ॥

हे पद्माकर मा विषीद जगतीचेतःप्रियंभावुको
धत्ते यस्त्वयि चन्द्रमा विमुखतां तस्यैव तल्लाघवम् ।
सौहित्यप्रतिपादने तव पुनः शक्ताः परिष्फुर्वते
पृथ्वीमध्यममी पराकृततमोदर्पा रवेर्भानवः ॥ २७ ॥

अनन्तरमसावनियन्त्रणस्नेहपरवशानुचरो निजकरविलुलितोदकमवगाह्य कमलाकरमवचितसरोजपरिष्कृताग्रहस्तः समुत्तीर्य वारितो निषेवितदिवसबन्धुरयमवनिसुरधुरंधरो मन्दिराय मन्दमन्दमस्पन्दत ।

गत्वोपकार्यां फलितेशपूजः स भुक्तवान्भूसुरभुक्तशेषम् ।
ग्रन्थौघपाठं प्रतिपद्यते स्म सुचर्ययार्योः समयं नयन्वै ॥ २८ ॥

तथा हि ।

एष दुर्हृदनुरोधहेतुकं भेदमात्मपतिना समं गतः ।
आपदामहह भाजनीभवन्पूरुषो भजति भूयसीं व्यथाम् ॥ २९ ॥

ईशवासरमणेरदर्शनादेधमानघनमोहशार्वरः ।
संनिकृष्टमपि शश्वदात्मनो हर्षशेवधिमसौ न पश्यति ॥ ३० ॥

बोधचन्द्रमसि पूर्णविग्रहे मोहराहुमुषिताकृतौ सति ।
स्नानदानयजनादिकान्यसौ मोचनावधि मुदानुतिष्ठति ॥ ३१ ॥

आ रसातलतलादयं विघोरा च वासभवनाद्गतागतैः ।
खिद्यमानहृदयो गवेषते स्फारविश्रमसुखास्पदं पदम् ॥ ३२ ॥

आधिवीचिमदनादिसंसृतिव्याधिभेषजविशेषवेदिनम् ।
शर्मदं शरणमेयुपायमयं ब्रह्मनिष्ठभिषजं प्रपद्यते ॥ ३३ ॥

देशिकोक्तिदृढकुञ्चिकाकृते गाढविभ्रमकवाटपाटने ।
आगमान्तवसुमन्दिरान्तरादर्थमिष्टमनघोऽयमृच्छति ॥ ३४ ॥

पण्डितः पटुविचारशालिकान्यन्नकोशमयवल्कसंवृतेः ।
सारमाकलयते जगद्घनस्मारुहात्किमपि नित्यनिर्मलम् ॥ ३५ ॥

मानतर्कमयवारिधारया क्षालितेषु गगनादिपांसुषु ।
अन्तरङ्गफलकान्तरे सुधीरीशतात्द्रविणमीक्षते निजम् ॥ ३६ ॥
पारदुर्विधसुखप्रकाशके तत्त्वबोधघनयोदये सति ।
अस्य कर्मकरणाधिकारिता नानटीति न कदाचिदप्यहो ॥ ३७ ॥
विश्वकण्टकिफलं विशुद्धया वेदनच्छुरिकया विदारयन् ।
आन्तरं रसममुष्य निर्ममः सर्वथा निरुपमं समश्नुते ॥ ३८ ॥
विप्रयोगसमये स्वमायया विक्रियाशतमुपैति पूरुषः ।
हन्त मुक्तिरमणीमवाप्य तामेष निर्विकृतिरेव तिष्ठति ॥ ३९ ॥
मुक्तिसंगतिमहोत्सवो मुनेरीदृशोऽयमिति केन वर्ण्यते ।
चेतसा सह यतो निवर्तते श्रेणिरागमशिरोगिरामपि ॥ ४० ॥

अपि च ।

चित्तेन वृत्त्या विषयेण संगान्मातृप्रमामेयदशां प्रपन्नः ।
आलोक एव प्रतिभासते चेदतः किमन्तर्मुखताखि भिन्ना ॥ ४१ ॥
निःसन्धिबन्धं निगमान्तवाचः परप्रतीत्योरभिदां वदन्ति ।
सा च स्वरूपानतिरेकिणी चेदहंप्रतीतेरपरो न योगः ॥ ४२ ॥
अजादिकीटान्तमनर्थजातमध्यस्तमेवात्मनि बोधरूपे ।
स एव चेदस्ति भवेन्निवृत्तिरतः परं किं पुनरस्ति साध्यम् ॥४३॥
इतीदृशीमागमदेशिकाभ्यामधीयमानामवबोधनायम् ।
द्रढीयसीमेत्य तपोभिरेकः पारं परं याति भवाम्बुराशेः ॥ ४४ ॥

किं च ।

विना भृङ्गप्रपतनं विगमो न हि जन्मनाम् ।
भास्वतो दर्शनमृते प्रशमस्तमसामिव ॥ ४५ ॥

आधिक्यमस्माज्जगतोऽधिगन्तुं विश्वाधिकोक्तेर्विषयं प्रपद्ये ।
कालप्रदमाद्भयापनुत्त्यै कृतान्तशिक्षाकृतिनं प्रपद्ये ॥ ४६ ॥
शृङ्गारजृम्भणवारणाय प्रसूनकोदण्डरिपुं प्रपद्ये ।
विनेतुमार्तिं विषयाध्वजन्यां वटद्रुमाधोवसतिं प्रपद्ये ॥ ४७ ॥

मोहातिरेकस्मयमोषणाय पादार्दितापस्मरणं प्रपद्ये ।
कर्माटवीपाटनकौतुकेन पाणौ विराजत्परशुं प्रपद्ये ॥ ४८ ॥
विशुद्धविज्ञानविकासहेतोः प्रबोधमुद्राभरितं प्रपद्ये ।
तापत्रयाटोपसमापनाय प्रालेयधामाभरणं प्रपद्ये ॥ ४९ ॥
नैर्मल्यसंपादनवाञ्छयाहं मन्दाकिनीमाल्यधरं प्रपद्ये ।
प्रसादलाभं परमीहमानो मुग्धस्मितोल्लासिमुखं प्रपद्ये ॥ ५० ॥
व्यथामशेषां व्यपनेतुकामो नाम्ना मृडं नाथमहं प्रपद्ये ।
........................................................ ॥ ५१ ॥
सर्वज्ञतासारभूतं प्रपद्ये निःसीमसौहित्यनिधिं प्रपद्ये ।
अनादिबोधायतनं प्रपद्ये स्वतन्त्रतायाः सदनं प्रपद्ये ॥ ५२ ॥
हरं प्रपद्येऽहमलुप्तशक्तिमप्रमेयसामर्थ्यमहं प्रपद्ये ।
शिवं प्रपद्ये जनकं विधातुरीशं हृषीकेशगुरुं प्रपद्ये ॥ ५३ ॥
इति प्रपत्तिमीशस्य तन्वते तत्त्वदर्शिनः ।
तत्क्रतुन्यायरसिकास्तत्तादृशफलाप्तये ॥ ५४ ॥

तदनु तदनुवर्णितशास्त्रसमाकर्णनादिव विरक्तभावमापाद्यमानः कमपि शमप्रकर्षमुपदर्शयन्नरुणसारथिरवततार चरमगिरिशिखरम् ।

अस्ताद्रिशृङ्गादतिमात्रतुङ्गाद्दात्माधिनाथं पतयालुमर्व्यौ ।
द्रष्टुं नलिन्यो धृतभीतिभारा न्यमीलयन्नीरजलोचनानि ॥ ५५ ॥
नभस्तमालद्रुमपल्लवाभा नव्या बभौ सान्ध्यमयूखरेखा ।
अम्भोधिनिर्मज्जदभीशुमालिरथाग्रकौसुम्भपताकिकेव ॥ ५६ ॥

दिवसकरविप्रयोगतनीयसीनामाशाविलासिनीनामसितजलदानुकारिणी वेणिकाधोरणीव तमिस्रपङ्क्तिरदृश्यत ।

प्रतिवेश्म तमिस्रेण बन्दीकृत्य नियन्त्रिताः ।
प्रभा इव पतंगस्य दीपरेखा दिदीपिरे ॥ ५७ ॥

सपदि गगनपथादपसरता वास(र)करेण सरभसानुसरणोद्धटतमःप्रतिभटविलोपनाय विस्तारितानि परिष्करणमुक्ताफलानीव तारकापटलानि ददृशिरे ।

तमिस्रकस्तूरिकयानुलिप्ता प्रदीपचाम्पेयकृतावतंसा ।
वाटी हरिद्रासकसज्जकानां बबन्ध चन्द्रागमनप्रतीक्षाम् ॥ ५८ ॥
अत्रान्तरे सिन्धुरवापदेशादानन्दयन्सर्वदिगन्तराणि ।
ध्वान्तास्यमित्रीणतुषारतेजः प्रयाणभेरिध्वनिराविरासीत् ॥ ५९ ॥
आगत्य संकोचभृतः सरोजादिन्दीवरं यावदलिस्ततोऽपि ।
मौनस्पृशो यातुमियेष तावदिन्दुस्तदुद्बोधकरो जजृम्भे ॥ ६० ॥

विगतसकलाशाविकासकर्मणि परिहृतविषयानुभावे संमीलितसरोजचक्षुषि तेजः किमपि दीपाकारमन्तरनुसंदधाने कालकर्मन्विनि पृथुलतमःपटलभेदमुपपादयन्प्रबोध इव सुधाकरो भगवान्प्रादुरभूत् ।

द्यौरिन्दुनाधूतपुरस्तमिस्रा पश्चाच्च रिङ्खत्तिमिरा बभासे ।
हृतोत्तरीया हृदयेश्वरेण तन्वी नितम्बस्तिमिताम्बरेव ॥ ६१ ॥
संध्यारुणं प्रागथ सान्धकारं पश्चान्नभः प्लावितमिन्दुभासा ।
रेजे विराजत्क्रमजृम्भमाणरजस्तमःसत्त्वमिवान्तरङ्गम् ॥ ६२ ॥

महादने महसि तत्र सतिमरूढे
वाराकराम्बुलहरी ववृधे यथेष्टम् ।
चन्द्रोपलाः सरसतामधुरुत्पलानि
चक्रुः स्मितं किमुत यानि सचेतनानि ॥ ६३ ॥

न चेत्पुराणौ पुरुषौ नताङ्गीवशंवदोरःस्थलवामभागौ ।
तादात्विकं तावपि न क्षमेतां कामोद्यमं का गणना परेषाम् ॥ ६४ ॥
काश्यां तदा कामकलाजनीति किमद्भुतं तत्र कृतान्तशत्रोः ।
तथा स्मरन्दग्धवतोऽपि देहे संदृश्यते शैलसुतास्तनाङ्कः ॥ ६५ ॥

तथाहि ।

विलासिनी काचन विप्रयुक्ता संतापिताङ्गी नवचन्द्रिकाभिः ।
विगर्हणापूर्वमिदं विषण्णा जगाद चन्द्रस्मरगन्धवाहान् ॥ ६६ ॥
कोदण्डदण्डः कुरुनन्दनेन मुक्तो रुषा मूर्ध्नि शशाङ्कमौलेः ।
हिमद्युते यत्त्वयि नापपात मद्दुष्कृतानां महिमा स एषः ॥ ६७ ॥

पान्थावलीभञ्जनसंचितेन दोषेण दोषाकरता तवेन्दो ।
आलोकिते त्वय्यत एव चक्रैराशास्यते चण्डकरावलोकः ॥ ६८ ॥
क्षपाकरक्ष्वेल विभावये त्वां हालाहलादप्यतिमात्रघोरम् ।
स कण्ठ एव स्तिमितः स्मरारेरुपागमस्त्वं पुनरुत्तमाङ्गम् ॥ ६९ ॥
धिग्धिक्त्रिलोकीजनगर्हणीयां चारित्रमुद्रां तव शम्बरारे ।
भवन्तमेकं परिहृत्य के वा धनुर्भृतः स्त्रीषु पराक्रमन्ते ॥ ७० ॥
मुग्धासु चेतोभव मादृशीषु मुहुर्भवान्यत्प्रकटीकरोति ।
क्रुद्धे पुरद्रोहिणि पौरुषं तत्क्व वा विनिद्रात्तुमगात्तदानीम् ॥ ७१ ॥
आखेटमध्वन्यवधूमृगेषु प्रपञ्चयन्पञ्चशरः किरातः ।
पिकालिगीतिप्रचुरो वसन्ते महीं मरुद्वागुरया निरुन्द्धे ॥ ७२ ॥
संभ्राम्यदिन्दिन्दिरचक्रनेमिसीमन्तिताशेषदिगन्तसीमा ।
महीतलान्धंकरणः परागैर्भ्राम्यति पान्थानतनोः शताङ्गः ॥ ७३ ॥
तत्तादृशा दक्षिणतागुणेन विभावयन्विश्वसनीयभावम् ।
मरुद्भवोऽयं यत मादृशीषु प्रभञ्जनत्वं प्रकटीकरोति ॥ ७४ ॥
मध्येनितम्बं मलयाचलस्य स्पृष्टो नु दावाग्निशिखाकलापैः ।
विषोर्मिलव्यालमुखच्युतो वा मन्दानिलः सौति ममाङ्गतापम् ॥ ७५ ॥
उष्णः स्वभावादनिलाग्निकोऽप्ययमुपाधितः शीतलतां दधाति ।
आलिङ्गनादस्य कथं घटेत पत्त्रावशोषः परथा लतानाम् ॥ ७६ ॥
उष्णच्छिदामुष्णनिषेवणेन भिषग्जनाः प्राहुरिति प्रतीताः ।
कुम्भीनसा घोरविषोष्णशान्त्यै पिबन्ति बालानिलमुग्रवीर्यम् ॥ ७७ ॥
हराक्षिकीलाभिहता रतीशप्राणानिला एव परं धरायाम् ।
पटीरशैलानिलकैतवेन पान्थावलीप्लोषकृतो वलन्ते ॥ ७८ ॥
स्वयं जगत्प्राणतया स्वधाम वियोगिनीविग्रहचक्रवालम् ।
नभस्वतो निर्वहतः कृशानुरवाप्तजन्माभवदाश्रयाशः ॥ ७९ ॥
मितो यतः शैत्यमतो बिभर्ति नवः समीरो न तु शीतभावात् ।
अस्यावलेहं सृजतामहीनां भिन्ना रसज्ञाः परमत्र मानम् ॥ ८० ॥

पटीरशैलेन्द्रफणाधरेभ्यो जनावलीजीवितमोषविद्याम् ।
अभ्यस्यता चेदमुना गृहीता निद्रापि नैष प्रसरेद्विषादः ॥ ८१ ॥
अयं भुजङ्गावलिपीतशेषः समीरपोतः स्वविकासहेतोः ।
वियोगिनीजीवितमारुतानामसंशयं संग्रहणं तनोति ॥ ८२ ॥
निरागसामध्वगसुन्दरीणामुद्वेगदानादुपजातरोषाः ।
स्वच्छन्दमन्तः श्वसनं निरुध्य मन्ये निगृह्णन्ति महानुभावाः ॥ ८३ ॥
जगत्त्रयोपद्रवशातनाय पीताम्बुराशिः प्रथमो मुनीनाम् ।
बालानिलाब्धिं च पिबेदवेलं न चेदयं नागनिलीढशेषः ॥ ८४ ॥
अगस्त्यदिङ्मारुतमापतन्तं वृष्टेरवग्राहमुशन्ति वृद्धाः ।
अहो भवत्यस्य समागमेऽपि वियोगिनीलोचनवारिवृष्टिः ॥ ८५ ॥
और्वं पयोधेरवलेपशान्त्यै समीरणस्यापि च सर्पजालम् ।
विधिर्विदध्यान्न यदीयमुर्वी कथं न जायेत कथावशेषा ॥ ८६ ॥
श्रीरामविश्लेषविषण्णसीताप्राणप्रतिष्ठापनवीततन्द्रः ।
स्त्रीणामसुमासपटोः समीरादतो हनूमान्कथमाविरासीत् ॥ ८७ ॥
विना जगत्प्राण भवन्तमेषा विश्वत्रयी न श्वसितुं क्षमेत ।
ईदृग्विधेऽपि त्वयि खेदहेतौ वियोगिनीभिर्वद किं विधेयम् ॥ ८८ ॥
धर्मच्युतस्योचितमाशुगस्य तीक्ष्णाकृतेर्देहियथैकरस्यम् ।
आविःसुधर्माश्रयणस्य ते तु दाक्षिण्यधन्याशुग तद्विगेयम् ॥ ८९ ॥
भवन्तमाहुः प्रथमेशमूर्तिं पदार्थशुद्धेः परमं च हेतुम् ।
सदागतिं चात्र समीर किं ते युक्तं वियुक्ता युवतीर्निहन्तुम् ॥ ९० ॥
प्ररूढमन्तः पथिकाङ्गनानां वियोगशोकानलविस्फुलिङ्गम् ।
किं मञ्जरीगर्भरजःकरीषैः समीर संवर्धयतः फलं ते ॥ ९१ ॥
घृणा न ते दक्षिणगन्धवाह तवावतारे तरवोऽपि धान्याम् ।
वितन्वते व्यक्तशरीरकम्पाः प्रवालपाणिप्रविधूननानि ॥ ९२ ॥
श्यामश्रुतां याचि तपोधनानामादीविषाणामपि वक्रसीम्नि ।
विषाभिवृद्धिर्विदिता नभस्वन्नतो जगत्यामतिदारुणोऽसि ॥ ९३ ॥

सङ्गे भृशं क्रोशति षट्पदानां कु(हू)रवाधायिषु कोकिलेषु ।
अपह्नुवानो धृतिमध्वगानां भवान्विविक्ते पवमान वात्स्यम् ॥ ९४ ॥
आः क्रूरकर्मासि फणाभृतोऽपि धरातलेऽस्मिन्स हि तीव्रदंशैः ।
प्राणानिलानापिबति प्रजानां भवान्पुनः स्पर्शनलीलयैव ॥ ९५ ॥
अये समीरानिशमध्वनीनवधूवधैः पातकमर्जितं ते ।
वल्लीप्रवालव्यपदेशतप्तभल्लाग्रपातैरपि किं मृग्येत् ॥ ९६ ॥
भृगुप्रपातं बहुतीर्थसेवां दिने दिने दीप्तशिखिप्रवेशम् ।
करोषि मन्दानिल कामतस्त्वं कुर्वन्मुहुः पान्थकुटुम्बहिंसाम् ॥ ९७ ॥
मान्द्यैकभूमे मलयाद्रिवात मासद्वयीमात्रमवस्थितिं ते ।
अचिन्तयन्हन्त कथं तनोषि पदे पदे स्त्रीवधपातकानि ॥ ९८ ॥
प्राक्सेतुबन्धावसरे कपीन्द्रैरुन्मूलितश्चेन्मलयः समूलम् ।
नृशंस मन्दानिल निर्दयं त्वां पश्यन्ति किं पान्थविलासवत्यः ॥ ९९ ॥
मन्दं समागत्य ममांशुकाग्रमालम्बसे स्वेदमपाकरोषि ।
अहो पतत्साहितचापलस्त्वं पराङ्गनास्पर्शभयं न किं ते ॥ १०० ॥
मामङ्गनेति स्पृश मा समीर वियोगिनी व्यक्तमनङ्गनाहम् ।
कन्या नृपस्यान्यकरग्रहार्हाः स्पृष्ट्वा त्वया किं फलमाप्तमासीत् ॥ १०१ ॥
कृतावतारो हृदि गन्धवाह कन्दर्पनाराचगवाक्षिते मे ।
प्राणान्गृहाणाशु यतो भवेयममीकविश्लेषकथानभिज्ञा ॥ १०२ ॥
मय्येव संनह्यसि मन्दवात कान्ते मदीये करुणां दधासि ।
मृद्नासि चेन्मामिव निर्दयं तं स किं समायास्यति नान्तिकं मे ॥ १०३ ॥
रणे शताङ्गस्य रयातिरेको जैत्रश्रियं चापभृतः प्रसूते ।
मन्दं रथं त्वामधिरुह्य मारो मन्ये महेशेन पराजितोऽभूत् ॥ १०४ ॥
भवन्तमालम्ब्य रथीभवन्तं सखा रतेः शर्वजिगीषुरासीत् ।
प्राप्ते रणे तं प्रतिपाद्य तस्मै चक्रे त्वया स्वाशुगतानुरूपम् ॥ १०५ ॥
यदा रतीशं भगवानजैषीत्तदाप्रभृत्येव समीर भीत्या ।
दिवानिशं भ्राम्यसि दिङ्मुखेषु तथापि ते शाम्यति नैष दर्पः ॥ १०६ ॥

आयासि शीघ्रं हरिदन्तरेभ्यः शनैस्तु चण्डांशुभुवो दिगन्तात् ।
कामारिभीतिः खलु तत्र हेतुः सा चेन्न हन्याज्जगतीमकाण्डे ॥ १०७ ॥
मा मा मरुन्माणव वल्गनानि प्रकाममन्दप्रकृते विधेहि ।
पदे पदे त्वन्मदभञ्जनाय जाग्रत्यमी जातरुषो भुजङ्गाः ॥ १०८ ॥

तदनु मदनपीडां सोढुमक्षमतया तया हरिणशावेक्षणया प्रियतमाय संप्रेषिता सखी समेत्य तमित्यभाषत—

सन्त्येव कान्तेषु समश्नुवाना रागातिरेकं ललना जगत्याम् ।
नालोकितो न श्रुतिमागतो वा तस्या मृगाक्ष्यास्त्वयि भावबन्धः ॥१०९॥
आस्वाद्य दाक्षन्मधुनोऽपि हृद्यां गुणावलिं ते कुटिलायताक्षी ।
नितान्ततृप्ता नियतं सखीनामाहारवार्तामपि सा धुनीते ॥ ११० ॥
दूरीकृतस्त्वद्विरहार्तिभारादुदित्वरोरुश्वसितैरिवास्याः ।
इन्दीवराक्ष्या वदनारविन्दे संदृश्यते जातु न मन्दहासः ॥ १११ ॥
मनोभुवो धूममयैरिवाक्ष्णोरुत्पादितादुष्मलबाष्पपूरात् ।
भीतेव तस्या मृगशायताक्ष्या निद्रा दृशोर्नैव पदं निधत्ते ॥ ११२ ॥
पराङ्मुखी चन्दनपङ्कलेपवीटीक्रियामाल्यविभूषणेषु ।
बाला विधत्ते भवदोष्ठबिम्बसुधारसास्वादकृते तपस्याम् ॥ ११३ ॥

दूतिकावर्धितस्नेहदीपितं मदनानलम् ।
कामी निर्वापयामास कान्ताश्लेषसुधामृतैः ॥ ११४ ॥

आलीहितोक्तिनिकरादनु दूतिकाना-
माभाषणादनु मनोभवशासनाच्च ।
अम्लानमानकलिकामपरो विलासी
संप्रीणयन्प्रियतमामिदमावभाषे ॥ ११५ ॥

पाठीनकेतुपरदेवतया त्वया किं-
माज्ञापिते कवरिकारचनादिकृत्ये ।
दासामुना परिजनेन समुल्लसद्दृ-
पङ्केरुहाक्षि तव केन बभूव कोपः ॥ ११६ ॥

यः शैशवात्प्रभृति पाणितले निवेश्य
संवर्धितोऽजनि मया दयिते स कीरः ।
आख्याति वाक्यमहितं त्वयि रोषवत्या-
मित्यद्भुतं न विरुणद्धि यदात्मजोऽपि ॥ ११७ ॥

बाले मया न गणिता भवदाहृतेन
ये मीनकेतनसमीरकिशोरमुख्याः ।
आसींस्ततोऽपि मम भीतिरहो भवत्यां
वैमुख्यभाजि विषमो विधिदुर्विपाकः ॥ ११८ ॥

मन्तुप्रशो रचयितुं मम शिक्षणानि
स्वातन्त्र्यमस्ति तव जीवितनायिकायाः ।
कन्दर्पगन्धवहकैरविणीविटानां
का वा कृशाङ्गि मम निग्रहणे प्रसक्तिः ॥ ११९ ॥

आगःसमीक्षणकृतस्तव चेदमर्षः
शोणाधरे विरचय स्वयमेव शिक्षाम् ।
मां विप्रयोगिजनमारणवीततन्द्र-
कन्दर्पपातकिकरे न समर्पयेथाः ॥ १२० ॥

पादारविन्दतलताडनबाहुयन्त्र-
निक्षेपतुङ्गकुचदुर्गनिवेशितानाम् ।
कामं त्वया कनकगौरि समाहिताना-
महों भवामि मयि चेदपराधशङ्का ॥ १२१ ॥

प्रारभ्य पञ्चपदिनानि तव प्रसाद-
मभ्यर्थयन्त्रतिपतेरधिदेवतायाः ।
ध्यानाशनभ्रजनजागरणादि कुर्वे
प्रीतिर्न ते तदपि यत्स ममैव दोषः ॥ १२२ ॥

शातोदरि भ्रुकुटिजैत्रधनुर्लताया
भङ्गे कृतेऽपि सति कोपनया भवत्या ।

अश्रान्तमाशुगभरेण विचित्रकर्मा
मर्माणि हन्त मम कृन्तति पञ्चबाणः ॥ १२३ ॥
विश्वत्रयोदरभुवां विशिखव्रजानां
शश्वद्व्ययं रचयतो मयि शम्बरारेः ।
नाणीयसा भुजमदेन नताङ्गि शङ्के
वेणीलता विरहिता तव मालिकाभिः ॥ १२४ ॥
क्रीडाचकोरशिशवोऽपि कृशाङ्गि नून-
मेते परं वयमिव त्वयि सापराधाः ।
मन्दस्मितामृतमरीचिकरैरमीषां
तृप्तिं यदा रचयसे न तृषातुराणाम् ॥ १२५ ॥
तत्तादृशैः कुरवकीभवनं तपोभिः
प्राप्यं न मेरुपदवीमपि दूरभूताम् ।
हित्वा चकोरनयने भवतीमिदानी-
मभ्यर्थये तिलकभावमशोकता च ॥ १२६ ॥
प्राणेश्वरस्य पटुचाटुकृतः कुचाद्रि-
कस्तूरिकाभिरनुलिप्य भुजान्तरालम् ।
वेलातिलङ्घनचणप्रणयाभिरामा
रामा ददौ रदपटीं मुखवीटिकां च ॥ १२७ ॥
शक्रकोपशफलावलीसदृग्वीटिका····तिम····ला बभौ ।
चक्रतुः प्रकटरागमेदुरस्वस्वमानसनिवेशनं मिथः ॥ १२८ ॥
पाणिना प्रसवसङ्गिनीमलिश्रेणिकामिव निगृह्य वेणिकाम् ।
सुभ्रुवो मुखसरोरुहासवं सेवते स्म समरादरो विटः ॥ १२९ ॥
पाटलोष्ठपरिचुम्बने दृढ मेलनात्प्रथिमता प्रियस्तयोः ।
चारुतामरसमुद्गकश्रिय व्यानशे वदनमण्डलद्वयी ॥ १३० ॥
आत्मनेतुरनुरागसंपदः श्लाघनं विदधतीव संमदात् ।
गाढपीडितरदच्छदाधुना कामिनी व्यधित मौलिभूननम् ॥ १३१ ॥

अन्वकारि पुलकैरणूदरीबाहुनद्धपरिणेतृसंवृतैः ।
निर्भरस्तननिपीडनोद्गता शम्बरारिशरशल्यमण्डली ॥ १३२ ॥

मय्यमुष्य नितरां पचेलिमं मा स्म सौहृदमितश्चलत्विति ।
स्वस्तनाग्रमणिकीलयोर्युगं सा हृदि प्रियतमस्य संदधे ॥ १३३ ॥

अस्पृशत्करयुगेन कामिनः पश्चिमाङ्गमुपगूहने वधूः ।
न्यस्तमस्य हृदि मत्कुचाञ्चलं निःसरेत्क्वयमिहेति किं धिया ॥१३४॥

चित्तजार्चनचिरात्ययैनसो भञ्जनाय भृगुपातसाहसम् ।
कर्तुमेष किमु कामुको हठादध्यरुक्षदबलाकुचाचलम् ॥ १३५ ॥

या पुरा विरहिणी स्मराशुगैराप खेदमतिकोमलैरपि ।
सा बभूव वनितारतार्भटी(?)निर्दयप्रियविमर्दनक्षमा ॥ १३६ ॥

निर्विशङ्कनखसंनिवेशनः पाणिरोधरहितोष्ठचुम्बनः ।
स्वस्तिकोज्झितकुचोपगूहनः स्वैरलब्धरशनावमर्शनः ॥ १३७ ॥

विप्रलम्भविहितानुतापयोः संप्रहृष्टमनसोः समागमात् ।
तत्क्षणं तरुणयोस्तयोरभूल्लङ्घिताशयपथो रतोत्सवः ॥ १३८ ॥

तदानीं च तरुणिममदानीतरभसमुत्प्लुत्य केलीतल्पतलादुद्वेलमेखलाडम्बरविभाव्यमानसंरम्भा निजनर्मसचिवस्य समरविशेषसंनाहमसहमानेव तमधो निपातयन्ती तव कितव दर्पातिरेकमुत्पाटयामीति तर्जयन्तीव परिहृतार्जवगुणां भ्रूवल्लीमादधाना दशनदष्टाधरोष्ठपल्लवमाविष्क्रियमाणकण्ठग्रहणचण्डिमातिशया मानद, सपदि मारयामि भवन्तमिति सविकारमुदीरयन्ती श्रवणावतंसकुसुमपरिमलाकृष्टमधुकरकुलवाचालतया स्वबन्धुभिरिव दीयमानबन्धभेदोपदेशा साटोपविधीयमानचपेटाभिघातमायतवितायमाननिःश्वासपवनपरिपीतमार्दितनयपिष्टातपांसुमुष्टिभिरपनीयमाननिरवधिस्वेदमतिनिर्मितनखरायुधवितीर्यमाणनानाविधमर्मवेदमाश्चर्यगरिमनिश्चलविलोकनोद्ग्रीवपरिसरगतप्रदीपजालं किमपि विपरीतमदनरणरतिमुररीचकार शातोदरी ।

तस्मिन्विलासी तनुभग्नियुद्धे पराजयं प्राप्तमिवातिमात्रम् ।
हस्तारविन्देन नितम्बभागमास्फालयामास मृगेक्षणायाः ॥ १३९ ॥

संतुष्यता तादृशसाहसिक्यान्मीनध्वजेनेव कृता मृगाक्ष्याः।
पर्यस्तधम्मिल्लपरिच्युतानां बभूव वृष्टिः प्रसवावलीनाम् ॥ १४० ॥
कुचौ कराभ्यां कुलशैलतुङ्गौ जग्राह कान्तो जलजेक्षणायाः।
प्रतायमानादनयोः प्रकम्पान्मध्यव्यथा मा भवतादितीव ॥ १४१ ॥
सा मेखलामङ्गलवाचघोषैः कण्ठोदयत्काकुनिनादगीतैः।
वक्षोजनृत्तैरपि वारिजाक्षी चित्तेशयं दैवतमारराध ॥ १४२ ॥
अस्या भृशं पौरुषमास्थितायाः प्रपेदिरे विक्लवतां प्रतीकाः।
भीरोरनीका''''घसे प्रकामं शैथिल्यमङ्गानि खलु श्रयन्ते ॥ १४३ ॥
श्रान्ता पुनः सामिनिमीलिताक्षी कान्ता पपातोरसि कामुकस्य।
क्रीडासमासद्धवियातभावव्रीडादिवामुप्य तनुं विशन्ती ॥ १४४ ॥
संभोगान्ते किमपि सुमनश्चापनाडिंधमेन
मत्सुतायाः प्रियतमहृदि सीमणे स्थैर्यसिद्ध्यै।
गाढोत्पीडावलयितकुचोद्वान्तकाश्मीरलक्ष्या-
त्मायो रेजे बलवदभितो घट्टिता हेमरेखा ॥ १४५ ॥
चुम्बनोद्गमितवीटिकापृषदृषितप्रियदृगुत्थिता वधूः।
गात्रकामकरवालवल्लरीमाहवप्रकटितामथावृणोत् ॥ १४६ ॥
इति किल परमात्मनः सुखाब्धेर्विषयसमीरविसारितैस्तरङ्गैः।
जगदिदमभिषिच्यमानमासीदमितभयज्वरवेदनानभिज्ञम् ॥ १४७ ॥

धामूलवंशधूर्वहस्तु यावदूको निर्वर्तितसाध्यकृत्यसंतानप्रस्तुतनियमादरप्रवाहनिमज्जदखिलविषयाभिलाषोऽपि मानसपथनीतमकरकेतुशासनः सुखमशेत। तदनु दिगङ्गनादृढसमालिङ्गनचन्द्रिकाङ्गरागः प्रकटकलङ्ककैतवादतिचिरोपभोगपरिश्रान्तिगरिमविश्रान्ततनुलतां हृदन्तरेण विभावरीं दधानो दरनिमीलदानीलसरोजलोचनमारभ्यमाणनिद्रारसानुभूतिरियमुत्पलिनीति तदुपगूहनविधायिनो करसंहतिमात्मनः समेकपसंहरन्प्रचुरविहारखेदपरिम्लानमूर्तिरपरादिनिकेतशयनमजिहीत तुहिनदीधितिः।

गगनमणिसौधशिखरादभिसरति दिशं निशाकरे चरमाम्।
प्राप कुलिशायुधाशा परिपाण्डुदशां वियोगिनीव ॥ १४८ ॥

शीर्णपाण्डुरिमजीर्णपलाशा रूढसांध्यरुचिपल्लवपङ्क्तिः ।
पूर्वदिग्व्रततिरम्बरलक्ष्मीभूषणं तपनगुच्छमपुष्णात् ॥ १४९ ॥
आत्मनश्चिरमसंनिधिहेतोर्वैकृतं किमपि वारिधिनेमेः ।
चिन्तयन्निव शनैरुपतस्थे लोकबन्धुरथ मध्यमलोकम् ॥ १५० ॥
नभोमणिप्राङ्गणनर्मभाजस्ताराभिधाः केचन राजदाराः ।
आलोकमार्गादरविन्दबन्धोरपासरन्नभ्युपितोदयाद्रेः ॥ १५१ ॥
दिशो दशानन्दयितुं विधाय तिरस्कृतिं ध्वान्ततिरस्करिण्याः ।
महा''''रमा महसा स रथगिराकाशरङ्गस्थलमाससाद ॥ १५२ ॥
अर्कोदयात्मागधिगत्य बोधं मान्नस्तु स प्रातरुपास्य संध्याम् ।
पिनाकिसेवां प्रणयन्नेनैषीन्निशात्रयं निस्तुलसत्त्ववृत्तिः ॥ १५३ ॥

इति समरपुङ्गवस्य कृती चम्पूकाव्ये चतुर्थ आश्वासः ।

---

पञ्चम आश्वासः ।

निष्काधिरैक्षिष्ट स निम्नगां तां पयस्विनीं पाण्डरफेनजालाम् ।
सुपर्वधेनोः सुतवत्सलायाः स्तनान्तरात्तत्य इव प्रवृत्ताम् ॥ १ ॥
शैवालपालिस्तटशीपि यस्या निलीयते वीचिनिरस्यमाना ।
हृतावगाहेन गणेन नृणां प्रक्षालिता पातकधोरणीव ॥ २ ॥
सविलासविवर्तनेषु शश्वद्विवृतावर्तगभीरनाभिगर्तम् ।
दधती चलमीनदृष्टि गात्रं भजते रागवतीव या पयोधिम् ॥ ३ ॥
पार्श्वद्वयप्रभवसारणिकासहस्र-
निःसार्यमाणलहरीकतया नितान्तम् ।
आमाद्रिनापि कृशता विदधाति यस्याः
रास्यावलीकलनकीर्तिमुखेन शोभाम् ॥ ४ ॥
अघमर्षणमन्त्रमन्तरस्यमावर्तनमाचरन्सुधीः ।
अदर्शीयजलान्तरावसत्कलिभीत्येव कृतार्पितशिरम् ॥ ५ ॥
सलिलैरमिले नस्याः कलिते नित्यकर्मणि ।
आदिदिशत्पनो भामा मानिष्ठन स धार्मिकः ॥ ६ ॥

श्रीनन्दिशैलद्विपदानधारा हारावलीमर्णवमेखलाया ।
पुण्याम्बुपूरामथ भूसुरेन्द्रः पिनाकिनीं प्रापदसौ प्रपन्नाम् ॥ ७ ॥
उरुभिस्तटकेतकैरुदन्वन्महिषी दीव्यति या मनोज्ञमूर्तेः ।
कलधौतपिधानसङ्गहस्तैरभिगुप्तेव महामतैरभीक्ष्णम् ॥ ८ ॥
अतिसंनिहितोच्छ्रयावभङ्गे निपुणामाहितनीचतुङ्गभावाम् ।
अनुगच्छति या महीपतीनामनघां नीतिमदर्शितान्तरङ्गाम् ॥ ९ ॥

तत्र च पवित्रतरपाथसि प्रणीतमज्जनविधिरेष सज्जनशिरोमणिः सरोगणविमुक्तसारणीपूरनिर्वर्त्यमानशालिनिचयसंवर्धनक्रियं कुशसमिदाहृतिकुतूहलवशादग्रहारशतविनिर्गतैरवनिनिलिम्पमाणवककदम्बकैः ससम्भ्रमविडम्ब्यमानसप्लवनरहसा शम्बरकुलेन मुहुरलंक्रियमाणजाङ्गलमहीभागमागमजलधिपारगधीरजनमेधाभिभूतचण्डीशकुण्डलमतिलङ्घ्य तुण्डीरमण्डलं पातालभुवनमिव फणिराजसमधिष्ठितं विपिनान्तरालमिव व्याघ्रपदलाञ्छितं कलशाब्धिहृदयमिव कैटभद्वेषिनिद्रागृहाङ्कितं विपुलगिरिदुर्गमिव विमतभवभीतिसज्वरचण्डरीतिहरमहिण्डतं पुण्डरीकपुरम् ।

प्राकारपक्षे परिखासरम्यामुन्मेषवत्युज्ज्वलशृङ्गपत्रे ।
यत्रामितानन्दमयं महान्तः शिलीमुखाः सीधुरसं पिबन्ति ॥ १० ॥

तत्र च धरणीसुरामणीरनर्गलश्रद्धासमाहिततीर्थावगाहनः सकौतुकमाक्रान्तचि(वि)त्सभान्तरो यवनिकापनयनक्षणलक्ष्यमाणतेजःपुञ्जसंछादितदशदिशावकाशतया वारिदघटाविनिःसृतममृतकरसहस्रमपहसन्तं निपुणतरविनिहितेक्षणनिरूप्यमाणनिखिलप्रतीकतया मणिभवनमध्यदेशप्रविष्टमिव दृश्यमानमरुणसुतशिक्षणविधावपवृत्तदाक्षिण्यमपि दक्षिणं चरणमधो निधाय तिष्ठन्तमाटोपगरिष्ठविक्षेपभाविनीं त्रिभुवनविपत्तिमभिशङ्क्य सरयमुपसर्पता सव्यकरपल्लवेन कारितविनिवारणामिव किंचिदाकुञ्चितमितरपदसरोजमुद्यम्य नृत्यन्तमेकहस्ततलविन्यस्तेन सरभसपरिश्रान्तिसदीप्तहेतिना पवमानसचिवेना-····रि(नि)विष्टदेहतया विलसदष्टापदसालवेष्टितं कैलासशैलमिव भासमानमिथदेव नर्तनल्यानुगुणमित्यन्यपाणिसतन्यमानमतिल्टहडमरडात्कार-

न्दलं परिच्छेदयतेव परं परशयसरसिजेन विरचिताभीतिमुद्राभिनीतिमादि-नटमद्राक्षीत् ।

अवस्थिते मय्यपि गर्भदासे भागीरथी किं भवतैव धार्या ।
जगत्पते स्थापय तामिहेति मन्ये स नम्रीकृतमौलिरासीत् ॥ ११ ॥

आकर्णनव्रजनतीर्थवरावगाह-
निर्माल्यगन्धनिवहग्रहणायलोकैः ।
अन्येन्द्रियाघलिमवेक्ष्य भृशं कृतार्था-
मस्तौदमुष्य मृडमक्षमयेव जिह्वा ॥ १२ ॥

संनिधौ मम समस्तदेहिनां नृत्तमेव निखिलार्थसाधकम् ।
तत्फलैयमिति किं नु दर्शयन्पुण्डरीकपुरनाथ नृत्यसि ॥ १३ ॥

नालीकसंभवमुखामरनायकानां
सत्यादिलोकपतिभावसमृद्धिलाभम् ।
माधस्त्वदेकपरतन्त्रमुदाहरन्ति
तेषां पुनः किमभिलष्य तनोषि नाट्यम् ॥ १४ ॥

अमितद्रुहिणाण्डमण्डलीनामधिनेतुः स्वगताणिमादिमूर्तेः ।
घटते खलु कामुकस्य गौर्यास्तव संसन्नटताण्डवानुबन्धः ॥ १५ ॥

साक्षिणोऽपि जगतां तव शम्भो दर्शनाय विचरन्प्रतितीर्थम् ।
अङ्गजात्मजमवेषणशीलं हन्त लोकमनुयामि विमूढः ॥ १६ ॥

तावकीनपदतामरसार्चामायसानमनकृद्धिदधानः ।
श्रीसदाशिव कदा नु मुदाहं वासरान्क्षणमिव व्यपनेष्ये ॥ १७ ॥

अमी विद्यानिधिरस्य पार्श्वस्थितपतञ्जलेः ।
दिया किमियतीं श्रुत्वा स्तुतिं तूष्णीकतामयान् ॥ १८ ॥

अथ भुवपुङ्गवः मलयगिरिशङ्कुसंदानितां बन्धरशनामिव सिन्धुराजपट-मण्डपस्य विधिवनचरसमर्पितां व्यापादनवागुरामिव पातकमृगश्वापदपरं-परायाः शकलनितम्बमर्दिनीं श्रेमन्त्यामिव जगतीमृगीदृशो निरतिशयसन्नि-कर्षेणनिगृहणबोन्धविसङ्कटवक्षोजजघनविक्षोभजातवेदनामिव प्रतिशुकुल-गिरिगणनादेशेन विनिःश्वसन्तीं चाटुदुग्ममनखेदालसामिव पदे पदे तरङ्गरूपेण

तटभूमिमवलम्बमानां कलिविजयकर्मविहितोद्यमस्य धर्मक्षमापतेः कटकसंनिवेशैरिव कलशाम्बुराशिकल्लोलपाण्डुरैरमरनिकेतनप्रासादमण्डलैरविरहिततीरदेशां लासिकामिव रभसविभावितभ्रमीसहस्रशालिनीं नारायणीमिव नवकुवलयश्यामलां कौमुदीमिव कुमुदवनामोदनीं वनमालिमूर्तिमिव वारिजसमन्वितां पञ्चशरवैजयन्तीमिव पाठीनपरिशोभितां विलासवतीमिव विधूतफेनधवलचारुचन्दनामगाहत कवेरनन्दनाम् ।

स्पर्धावती वाढमिवाम्रनद्या सहस्रधा चोलभुवि स्रवन्ती ।
समन्ततः संवसथानुपेत्य पुष्णाति पुत्रानिव या सवित्री ॥ १९ ॥
कदापि नैवात्र पदं करोतु दुर्भिक्षतादोषकथापि चेति ।
मयाहवाहापरिवेष्टनेन बध्नाति चोलक्षितिपालनं या ॥ २० ॥

रोधोवनीपिकहलश्रवणैर्निकामं
सक्तेव या क्वचन संहृतलौल्यमास्ते ।
अन्यत्र तादृशविलम्बनजन्यमब्धे-
राशङ्क्य रोपमिव हन्त रयात्प्रयाति ॥ २१ ॥

स्वयमनुतटि यस्याः स्वादु संगृह्य तोयं
पृथुलफलघटीभिः प्रांशवो नालिकेराः ।
गगनमरुपदव्यां गच्छतो लेखपान्थां-
श्चलदुरुदलहस्तैः सत्यमाकारयन्ति ॥ २२ ॥

अनन्तरमयमवनिवृन्दारकमणिः प्रचुरफणिवल्लरीवेल्लितक्रमुकवनजालेषु चोलेषु विश्रुतं मायाघनतमिस्रमार्तण्डमण्डलभुवनमपि च्छायावनं साधारण्यपदवीविदूरमपि श्वेतारण्यं नारीव्यापारकमनीयसौधमपि गौरीमायूरं मुक्त्यार्जनरसिकमोदैकहेतुमपि मध्यार्जुनं जृम्भमाणहरिहरावदानघोषमपि कुम्भघोणं संचरदनघशैवसंजवनमपि पञ्चनदं स्त्रीलाञ्छिततदराक्षनटननृत्तरङ्गमपि श्रीवाञ्छं विमलाशयपुरुषपरिषदाशास्यमपि कमलालयमधिगत्य, परिशीलयन्कियन्तमपि पन्थानमतिलङ्घ्य, कतिपयदिनैरमलफेनपटलभासुरामपां श्रियमिव सरस्वतो वेलाचलस्तम्भयुगलावलम्बिनं पाशमिव दाशरथिवि-

१ कावेरीं नदीम् ।

स्यातिलासिकानाट्यस्य तिर्यगवष्टम्भयष्टिमिव तीव्रतरवातपरिभूतवार्धिमर्दन-पटिमशालिनः कल्लोलकपटमल्लस्य वेत्रलतामिव जलधिवीचिनर्तकीनटनवि-धोपदेशकारिणः समीरणदेशिकस्य मध्यवंशमिव फणिराजमन्दिरसमावृति-कृतो नीरधिद्वन्द्वनीप्र(प्र)द्वयस्य बन्धनदारुभेदमिव सलिलमर्त्येशावकभृतो वीचिमद्दूर्मिडोलाविशेषस्य विषमसमकरणविरचनाफलकमिव सगरकुलकीर्ति-शालि********पोषिणो वारिधिकेदारवसुमतीभागस्य सुवेलगिरिकीलसुदृढप्रसं-जितां दामनीमिव धरणीगवी कमठचरमाङ्कलितविनिवेशनां वैतानवेदिमिव राक्षसाधिपविजयदीक्षानुबद्धिनो रामचन्द्रस्य तूलिकामिव त्रैलोक्यधामनि रामचरित्रचित्रलेखनपटोः सरसिजासनशिल्पिसार्वभौमस्य विधुंतुदमिव दशकन्धरयशश्चन्द्रमसो युगंधरमिव पुरनिषूदनस्यन्दनस्य कालदण्डमिव घनकलुषमण्डलीनां नालमिव पौलस्त्यनगरारविन्दस्य वादनकोणमिव वाराशिदुन्दुभेः स्थूणामकाण्डमिव खरखण्डनप्रथापटमण्डपस्य दारणक-कचमिव सरिदधिपदारुणो गुरुतरग्रावद्रोणीमिव वाहिनीशखुरलीविहारस्य गाधभावाधिगमकाण्डमिव दशवदनशौण्डीर्यतटिनीविलासिनः शिक्षाकशा-मिव सिन्धुपतिभङ्गसैन्धवव्रातस्य नलसेतुमवलोक्य कौतुकाक्रान्तमना वच-नमिदमाचष्ट ।

जनकतनयाधिनेतुर्जयहेतुर्यातुधानपतिजेतुः ।
सेतुस्त्रिभुवनकौतुकहेतुर्भवतां तनोतु कल्याणम् ॥ २३ ॥

दशमुखरघुवरयशसी तुलयितुमरविन्दजन्मना कृतयोः ।
सिंहलजम्बूद्वीपच्छलघटयोर्यष्टिरवतु वः सेतुः ॥ २४ ॥

रघुवरकीर्तिनटीमणिरङ्गगृहे जयति दीप्यमानस्य ।
आधारयष्टिमेतत्प्रतापदीपस्य सेतुमालम्बे ॥ २५ ॥

मामवतु रामसेतुर्मध्ये वाराकरस्य यो भाति ।
भूपैः पुरा खनद्भिः कियतीव स्थापिता क्षितिर्मितये ॥ २६ ॥

चलकर्कर्णैः पयोनिधिशयने वेलावधूर्मिहर्म्यैः ।
आस्फालितोरुभागः स्वपितीव चकास्ति सेतुराजोऽयम् ॥ २७ ॥

सेतुर्जयति यदाक्रमसंभ्रमलोलाः समुद्रकल्लोलाः ।
विश्वत्रयीविलङ्घनलाघवशिक्षारता इवाभान्ति ॥ २८ ॥
पुष्णातु सेतुः प्रचुरां मुदं यो महीसुवेलान्तरमानदण्डः ।
वृद्धस्य सिन्धोरतिवेपमानतरङ्गपाणेरवलम्बदण्डः ॥ २९ ॥
कृत्तांशुकां यद्घटनेन धात्रीं द्रष्टुं धृतापत्रप एव रामः ।
ततान तत्संवरणानुकूलं यशोदुकूलं प्रथतां स सेतुः ॥ ३० ॥
सेतुः श्रियं पुष्यतु यद्भुजेन सुवेलमालम्बत भूतधात्री ।
पौलस्त्यकीर्तिप्रकराम्बुराशौ विहृत्य वेलामिव यातुकामा ॥ ३१ ॥
यद्व्याजदण्डेन नरेन्द्रवर्यैर्नियेशितेनेव कृताभिरोधात् ।
अपारयन्धावितुमब्धिभोगी विचेष्टते तं विनतोऽस्मि सेतुम् ॥ ३२ ॥
डिण्डीरनिर्मोकधरः स पुष्यादघानिलान्सेतुफणाधरो नः ।
निशाचराधीश्वरकीर्तिदुग्धं यः पायितोऽभूत्प्रभुणा रघूणाम् ॥ ३३ ॥
न केवलं येन पुरा रघूणां नाथो ललङ्घे लवणाम्बुराशिम् ।
सीतापहारोपचितापवादसिन्धुं च हन्याद्वृजिनं स सेतुः ॥ ३४ ॥
हिनस्तु सेतुर्दुरितानि यस्मिन्मनोज्ञफेनांशुकमण्डलानि ।
आस्फाल्य वेलाद्रिशिलासु वीचिहस्तेन विस्तारयतीव वार्धिः ॥ ३५ ॥
भास्वत्करानीतपयोदकुम्भसहस्रसंग्राह्यपयोभरस्य ।
उदन्वदन्धोरुपरिप्रदेशशिलामयीमो नलसेतुरेखाम् ॥ ३६ ॥
स्नपयन्पयसा यदम्बुराशिः परिलिम्पन्नवफेनचन्दनेन ।
मुहुरर्चयतीव रत्नसूनैस्तदुपास्से हृदि रामसेतुलिङ्गम् ॥ ३७ ॥
मकरालयचेलमध्यभाजः परितो लक्षितफेनसक्तुराशेः ।
क्षितिचक्रघरट्टकस्य यष्टिं कलये कल्मषपेषणाय सेतुम् ॥ ३८ ॥
विनिवेश्य यदर्गलां पयोधौ नरकद्वारकवाटिकायमाने ।
क्षितिजापतिरीशलिङ्गमुद्रां विदधे शर्म ददातु वः स सेतुः ॥ ३९॥
रघुवीरपदावलीसमर्चारचनायेव पयोधिना वितीर्णैः ।
स्खलदूर्मिरयोदितैः स्फुलिङ्गैरिव रत्नैर्विलसन्मुदेऽस्तु सेतुः ॥ ४० ॥

लघयत्वघराशिमेष सेतुः श्रयतां दीव्यति यः सुवेलमूले ।
दृढदण्ड इवार्पितः समूलं परमुन्मूलयितुं पुलस्त्यसूनोः ॥ ४१ ॥
नलसेतुमहं नतोऽस्मि सीतापतिकीर्तिप्रमदावलम्बनार्हम् ।
चलदब्धिपटीवृताप्रदीच्यद्धरणीमण्डलतालवृन्तनालम् ॥ ४२ ॥
सुवेलशैलद्विरदेन मायता कृतः सलीलं क्षितिवाशितो(सिनो)परि ।
करोतु यः सेतुकरो भवार्णवप्ररोहदंहोबिसिनीसमुद्धृतिम् ॥ ४३ ॥
नमामि सेतुं नदर्मिपाणिना तटे यदीये ततमौक्तिकावलिः ।
चकास्ति बन्धुः सरितां रघूद्वहप्रशस्तिवर्णप्रकरानिवार्पयन् ॥ ४४ ॥
श्रयामि सेतुं चलदूर्मिकाघलैर्विनिक्षिपन्यस्य तटे वराटिकाः ।
विराजते राक्षसराजविद्विषो गणं गुणानां गणयन्निवार्णवः ॥ ४५ ॥

परिचरितपुण्यपण्यावलीलाभविपणिसरणिं पुरुहूतपुरकवाटसमुद्घाटनकुञ्चिकां राघवयशःक्षीरसागरमहाक्षपमर्णवनेमिवरवर्णिनीवेणिकामतितुङ्गपवलिम्लुतनुभृदधिरोहिणीं दुरितसिन्धुसंतरणहेतुं सुकृततरणितोलनारित्रं लङ्केशबाहुतेजकङ्कारीयदूरीकरणयष्टिकां जलधियुगलसीमाविभागभित्तिं डिण्डीरवसनषण्डविन्यसनलिङ्गिनीं प्रचेतोनिकेतनप्रासादमालिकां दुर्ललितयातुधानसमाजधूमकेतुरामसेतुम् ।

वारिधिः समरवंशजन्मनां क्ष्माभुजाममितकीर्तिसेवधिः ।
यत्र दारुणि तिरश्चि लभ्यते संपदे स नलसेतुरस्तु नः ॥ ४६ ॥
सेतुरेष परिपातु पातकव्यालसंहतिविदङ्गपुङ्गवः ।
यस्य पार्श्ववितता सरित्पती पुष्यतश्चटुलपक्षविभ्रमम् ॥ ४७ ॥
पच्यमानपयसि स्फुटमौर्वज्वालया सरिदधीशकटाहे ।
आसिकाविधिकृतोऽवनिदर्व्या नाल्पघत्त दशा नलसेतुम् ॥ ४८ ॥
जलधिचक्रमिषाद्धन्यीकृते धनुषि दैवरघूद्वहसंहितः ।
रचयनादपराक्षसमण्डलीजयममौ नलसेतुशिलीमुखः ॥ ४९ ॥
दृष्टे सेतुः शोभते यद्दानवाणच्छिन्नाकारे वाहिनीसंनिवेशे ।
भाग्यश्रीर्चापादुभृन्दा कबन्धश्रेणी नृपं मोदनं संविधत्ते ॥ ५० ॥

यातायातायामतुङ्गैस्तरङ्गैर्दृश्यादृश्यो दृश्यतां रामसेतुः ।
वाताधूतं वार्धिचेलं यदूरौ भूयो भूयः स्थापयन्तीव धात्री ॥ ५१ ॥
मृत्स्नाकूटं मेदिनीनामधेयं विन्यस्यान्तर्विश्वसृट्कुम्भकारः ।
भ्रामयश्चक्रं प्रेङ्खयत्यङ्घ्रिरूपं यष्ट्या येन त्रायतामेष सेतुः ॥ ५२ ॥
सेतुं वन्दे सिन्धुराजस्य गावः कापं कापं भ्राम्ति यत्राङ्ककानि ।
चारं चारं जन्तुदुष्कर्मतृण्यां दोहं दोहं पुण्यदुग्धान्य(ट)न्ति ॥ ५३ ॥
मध्येपाथोराशि पातालमूलादुन्मग्नस्य क्रीडयोर्वीमिषेण ।
भाति ग्रीवेवादिकूर्मस्य यो मां पापासक्तं पावयत्वेष सेतुः ॥ ५४ ॥

दीर्णोञ्जकीकसभरं शिथिलप्रवाल-
वल्ल्यान्त्रनालमवकीर्णवराटदन्तम् ।
भग्नोर्मिबाहु च पतद्भिरगैर्बभूव
यन्निर्मितौ जलधिवर्ष्म स सेतुरव्यात् ॥ ५५ ॥

कुण्ठीकृताशरकुलाधिपगर्वराशिः
खण्डीकरोतु भवतां कलुषाणि सेतुः ।
भारासहिष्णुरिव यस्य पयोधिरङ्घ्रिं
वीचीकरैर्विततशङ्खनखैः क्षिणोति ॥ ५६ ॥

अहाय सेतुरशिवानि विहन्तु यत्र
सक्तेतरेतरतरङ्गमुखौ चकास्तः ।
वेलातिलङ्घनविधापणबन्धनाय
श्लिष्यत्परस्परकराविव सिन्धुराजौ ॥ ५७ ॥

सेतुर्मुदे भवतु वो जलमम्बुराशे-
र्वीरेण यत्करणकौतुकिना विभेजे ।
सीतावियोगशिखिरावणबाहुधाम्नोः
कर्तुं पृथक्प्रशमनामभिकाङ्क्षतेव ॥ ५८ ॥

विघ्नं जगद्गुरोरदादयं पुरेति रुष्टयोः
सुवेलगन्धमादनस्तराभियातिमृत्ययोः ।

निधाय मध्यसीमनि प्रवृद्धतोयदर्गलां
विरौति वाहिनीपतिः श्रियै स सेतुरस्तु नः ॥ ५९ ॥
उदञ्चद्दोषाभ्यामुदधिलहरीभ्यामुभयतः
कृतासङ्गः सेतुः कवलयतु पापानि भवताम् ।
भूतक्षोणीकन्यापतिविजयनिःसाणयुगली-
लसत्पार्श्वद्वन्द्वावलित्तकरिराजन्यविहृतिः ॥ ६० ॥
दक्षाः संगतलोकपातकविधौ साटल्यभाजो नृणां
चेतोभीतिविधायका मलिनतां संबिभ्रतो भूयसीम् ।
शुङ्गाः पातकराशयस्तनुभृतां भृ(ग)ङ्गा इवाम्भोनिधेः
सङ्गाद्यस्य विनिर्दलन्ति शतधा तस्मै नमः सेतवे ॥ ६१ ॥
श्रीमद्रामयशोदुकूलकलनावेम्ने नतिं मौलिना
कुर्मो गर्हितकर्मदग्धजनताजीवातवे सेतवे ।
शश्वद्यत्र विजृम्भतो रघुपतेः ख्यातिमतापाङ्कुरा-
न्यक्तान्मौक्तिकपद्मरागमिषतः सिञ्चन्निवाम्भोनिधिः ॥ ६२ ॥
मध्येवारिधि काञ्चनाचलमिलन्मध्या मही दृश्यते
पुंसां नौरिव कापि पुण्यपटली वाणिज्यलाभार्थिनाम् ।
लङ्का तन्निकटस्थितेव तरणिर्लम्बी तयोरन्तरे
सेतुः पाश इव स्फुरन्वितरतु श्रेयांसि भूयांसि वः ॥ ६३ ॥
यलमानवीथिकरलीलया मिथः
पृथुकम्बुकन्दुकमिह प्रहिण्वतोः ।
निहितेव यः स्फुरति यष्टिरन्तरे
सरिदीशयोः स नलसेतुरीक्ष्यताम् ॥ ६४ ॥
लङ्काभिव्याप्तिधाटीचटुलरघुवरोद्दामदोर्धाममार्ग-
त्रैलोक्यग्रामजाग्रद्व्यवहनयशोरोधविष्कम्भकाण्डः ।
सेतुर्वः संतनोतु श्रियमुभयनदीवान्धवोपान्तलील्य-
लोलत्कल्लोलमल्लद्विपयुगलसमीकार्भटीमध्यभित्तिः ॥ ६५ ॥

श्रीमत्कूर्मोरगेन्द्रक्षितिवलयमयैरादिमध्यान्तभागै-
रावद्धे मूर्तिमम्भोनिधिवसनसमावेष्टयमानां दधाने ।
पीठे यद्गोमुखाढ्ये कनकधरणिभृल्लिङ्गमाभाति तुङ्गं
पायादस्मानपायात्सुकृतनरपतेर्जैत्रकेतुः स सेतुः ॥ ६६ ॥
धर्मकोटेस्तदा तस्य धर्मकोटिमभीप्सतः ।
कथमात्माश्रयोऽप्यासीत्कार्ये न प्रतिबन्धकः ॥ ६७ ॥

अयं पुनरधिरूढगन्धमादनं रतिबन्धुशासनमभिवन्द्य नुतिबन्धमौखरीमविन्दत ।

नलसेतुबन्धतटकेलिशालिने नतिरस्तु शैलतनयाविलासिने ।
सृजतीव यन्मकुटसिन्धुरब्धिना सहनर्मसंलपनमूर्मिनिःस्वनैः ॥ ६८ ॥
यो वारिराशेरुदरात्तरङ्गमहोरगान्मौलिमृदोषधीशः ।
आकृष्य भूयस्त्यजतीव सोऽयमाप्तां मनस्यादिविषापहारी ॥ ६९ ॥
यस्याट्टहासेन्दुरुचा पयोधिलीलां दधाने लवणाम्बुराशौ ।
निद्राणनारायणनर्म धत्ते सेतुः स मां पुंगवकेतुरव्यात् ॥ ७० ॥
रमतां हृदि रामनाथदेवो वितता वारि········गेहे ।
श्रियमश्नुति सेतुबन्धरेखा शयितोर्वीधरचापनिर्विशेषा ॥ ७१ ॥
चण्डैः प्रगृह्य चलवीचिकरैर्नराणां
पापावलिं पृथुषु सेतुशिलातलेषु ।
यच्छासनेन परिपातयतीव सिन्धुः
सोऽयं प्रमास्तु हृदि सोमकलावतंसः ॥ ७२ ॥
व्याकीर्णविद्रुमजटावलयं विमुक्त-
फेनाट्टहासमवघूर्णितवीचिहस्तम् ।
संध्यासु यस्य नटनानुकृतिं समुद्रो
निर्माति शर्म वितनोतु स नीलकण्ठः ॥ ७३ ॥
आयात पातककृतो भवतामघानि
संक्षालयानि सहसेति यदग्रभागे ।

अम्भोधिरात्मभवसेतुविलङ्घनेन
सत्यापयन्निव चकास्ति मृडं तमीडे ॥ ७४ ॥

रामेश्वरो विजयते ललदूर्मिहस्त-
पर्यस्तशुक्तिपटलीकपटेन यस्मै ।
चूडामणीकृतसुधांशुकलान्तराणि
विश्राणयन्निव विभाति तरङ्गमाली ॥ ७५ ॥

पादावनम्रजनपङ्कपरंपराणां
संक्षालनामिव समुद्रजलैर्विधातुम् ।
श्रीरामसेतुतटसीमनि वासलीला-
माम्रेडयन्त्यटयतां मुदमद्रिधन्वा ॥ ७६ ॥

मुक्ताविद्रुमपद्मरागपटलीमुल्योपदामन्तिके
न्यस्यन्नेत्य सृजन्निव प्रणयिनीनिर्मोचनाभ्यर्थनाम् ।
भूयो याति मुखे वहञ्जलनिधिर्भङ्गं किलापाङ्कतो
येन प्रत्यहमेधते स भगवानेणाङ्कचूडामणिः ॥ ७७ ॥

जानकीकरसमूढवालुकामूर्तये श्रुपितराघवार्तये ।
रामनाथ इति नामशालिने शूलिने नटनशीलिने नमः ॥ ७८ ॥

तदनु पण्डिताखण्डलः पाण्ड्यधरणीमण्डनायमानमुरुतरश्रीलास्यमुखरमुपगम्य हालास्यनगरमगणेयगुणविशेषामशेषभुवनमातरमपि सचित्रीकृतमलयध्वजधरित्रीशयलभामपरयुवतिदुर्लभाभिरङ्गजनृपालपुंगवशक्तिभिरिव यशोजवृद्धिभिस्तिसृभिरुपशोभमानयौवनारम्भां विपुलसंरम्भविहितनिखिलदिग्विजययात्रावसरनेत्रातिथीभवत्त्रिपुरविरोधिसंनिधितिरोहिततृतीयपयोधरभरां सपदि मीनाक्षीमध्यक्षयन्प्रणिपातपूर्वमयमभिजातपथविहारिणीं वाणीममाणीत्।

हरमिव समागतं चित्ताय आग्रतमग्रतो
रचयति कुचे तार्तीयीके भुजान्तरमञ्जनम् ।
सपदि विनतो लज्जासङ्गात्तदीयगवेषण-
प्रवण इव नः पायान्मीनाक्षि ते मुखचन्द्रमाः ॥ ७९ ॥

स्तनशिखरिणोः स्पर्धामुत्पाद्य तावकयोः पुरा
कुलमहिधरो दृष्ट्वा तस्थौ तृतीयकुचात्मना ।
अधिगतवतोः पश्चादैक्यं तयोः सविधादसौ
निजपरिभवं प्रायो निर्धार्य देवि तिरोदधे ॥ ८० ॥

तव गिरिसुते वक्षोजेषु त्रिषु स्मरशासिनो
नयनसरसीजातैर्नीतेषु सत्सु····भक्तताम् ।
दहनघटनत्रासाल्लिल्ये तृतीयपयोधरः
समकुचदृदश्चिन्ता····न्धादलीकविलोचनम् ॥ ८१ ॥

पुरहरकरामर्शत्रासेन भूधरनायक-
स्तव कुचयुगोपान्ते प्राप्य स्तनान्तरभूमिकाम् ।
भगवति तिरोभूतः क्वापि प्रतिक्षणभाविनी-
महह पुनराशङ्केशानस्य हस्तविमर्शनाम् ॥ ८२ ॥

भवति विमुखे धैर्ये पाणौ विमुञ्चति कार्मुकं
सुरभिलशरेऽप्याजौ स्वीकुर्वति प्रतिकूलताम् ।
परमवसर लब्ध्वा पृथ्वीधरेन्द्रशरासनो
जननि भवतीमाविर्लज्जां करे जगृहे हरः ॥ ८३ ॥

इति सुमतिरयमभिदधानो विगलितोपमानसंकथां रूपसंपदमखिलजगदम्बिकाया विभावयन्पुनरिदमभाषत—

अम्ब कदम्बवनान्तरमन्दिरसंजातकेलिसंचारे ।
भूरि पुरवैरिलीलासाक्षिणि मीनाक्षि देहि वाग्देवीम् ॥ ८४ ॥

आचिकुरचरणपल्लवमनवद्यानां शिवे तवाङ्गानाम् ।
उपमां वदञ्जघन्यैरुपमानैः क इव नापराधी स्यात् ॥ ८५ ॥

तदपि भवदीयचिन्तासुकृतानि····लब्धुमिच्छन्त्या ।
मत्यया समाहितः परममयमारम्भः सचित्रि सहनीयः ॥ ८६ ॥

विशिखदक्षिणेतरकरपल्लवमन्यपाणिधृतकीरम् ।
किमपि करुणापयोधेरधिदैवतमाविरस्तु मम चित्ते ॥ ८७ ॥

कुलगिरिकुमारिके तव कुन्तलपरिमुषितसंपदो मेघाः ।
क्रन्दन्ति नूनमेते क्षितिभृत्पादेषु कृतनिष्यन्दाः ॥ ८८ ॥
जडमपि दोषाकरमपि समधिककौटिल्यमपि सुधासूतिम् ।
शिरसा वहसि यदेषा जननि कलापक्षपातशैली ते ॥ ८९ ॥
आपाटलाधरच्छविबालारुणकिरणपरिचयात्किं वा ।
अनिशविकस्वरमास्ते पार्वति भवदीयवदनतामरसम् ॥ ९० ॥
कमलभवन्मुखभेदे कलयेदीशोऽपि देवि मीमांसाम् ।
एकत्र षट्पदावलिरितरत्र श्रृङ्खला न चेद्दृष्टा ॥ ९१ ॥
शशलक्ष्मणो विशिष्टं शफराक्षि मुखं तवेति मे धिषणा ।
यदिह विशेषकमिन्दोरसुलभममितैस्तपोभिरप्यास्ते ॥ ९२ ॥
तव जननि लोचनद्वयमाभाति मदारुणीकृतोपान्तम् ।
निजगतिनिरोधकारिणि कर्णयुगे किंचिदात्तरोषमिव ॥ ९३ ॥
शर्वाणि ते कटाक्षः शक्तिं जगृहे नु कालकूटस्य ।
गलकलितोऽपि स विकृतिं न दिशति नाथं यदेष मोहयति ॥ ९४ ॥
श्यामापि विमलशीला संततलोलापि संभृतस्थैर्यार्ग ।
गौरि कुटिलापि ऋज्वीं तनुते श्रियमानतेषु तव दृष्टिः ॥ ९५ ॥
तावकहसितविडम्बनसंभृतरागागसां विधोर्भासाम् ।
संमन्यते चकोरीचञ्चुसंदंशकोटिभिश्छेदम् ॥ ९६ ॥
दशनकिरणप्ररोहैर्लश्रीममृतैरिवाभिषिञ्चन्ती ।
श्लाघावलितशिरस्कं गायति यशांसि कामारेः ॥ ९७ ॥
भवदीयकण्ठनालीपरिवादिन्यामलीकदकान्ते ।
तन्त्रीषु··············दधत माङ्गल्यहेमसूत्राणि ॥ ९८ ॥
हालाहलानलाकुलहरगलसंतापकन्दलीहरणात् ।
मूनो भुजद्वयीं तव तनुरुचिमृणालतरङ्गयुगलीति ॥ ९९ ॥
कलयामि··················ननि श्यामो यदंशुसंदोहः ।
मूर्च्छति कपोलमूले मङ्गल्यदूर्वावतंसमतिदायी ॥ १०० ॥

परिणतदाडिमबीजभ्रमचुम्बितपद्मरागमणिमुद्रम् ।
विभ्रमशुकमालोक्य स्मेरमुखीं त्वां भजामि मीनाक्षि ॥ १०१ ॥
आनन्दपारवश्यादपि विस्मृतमन्तरान्तरा गेयम् ।
हैमवति यद्गिरा पुनरनुसंधत्से स मां शुकः पायात् ॥ १०२ ॥
अङ्गुलिभिरम्ब तन्त्रीताडनसमये तव स्फुरन्तीभिः ।
संगीतविभवसंभृतपल्लवनिचयेव भासते वीणा ॥ १०३ ॥
माभूदयं विलीनो गीतिरसेनेति किं नु मीनाक्षि ।
कुचगिरिमलाबुरुद्धं कुरुषे वीणाविनोदवेलायाम् ॥ १०४ ॥
मध्येगानसुधाम्बुधिमज्जनमभिशङ्क्य किं नु वा धन्ये ।
वीणावादनकेलिषु कलयसि कुचयोरलाबुविन्यासम् ॥ १०५ ॥
त्वं वल्लकी च देवि द्वे सख्यौ कृतपरस्पराश्लेषे ।
चारुस्वने भवत्यौ सृजत इवान्योन्यकेलिसंलापम् ॥ १०६ ॥
स्फीते महःप्रवाहे मज्जनलीलाकृतः स्मरेभस्य ।
उत्पतिताविव कुम्भावुरसिजभारौ तवावभासेते ॥ १०७ ॥
तव तरुणि मानमायी कोऽपि न रोमालिरस्य मणियष्टिः ।
न कुचौ करण्डयुग्मं मौक्तिकमाला न कन्दुकश्रेणिः ॥ १०८ ॥
शिशुतां विजित्य मध्यमसीम्नि निखातो नवेन तरुणिम्ना ।
रोमलतिकात्मना तव राजति जम्भारिमणिजयस्तम्भः ॥ १०९ ॥
कुचगिरिचरद्भवाशयकरिपातनजातकौतुको मदनः ।
तावकगभीरनाभीदम्भादम्ब ध्रुवं चकार बिलम् ॥ ११० ॥
कुचयुगलभारपीडा कुरुते तनुतां तवावलग्नस्य ।
अविवेकिनः समुन्नतिरन्तिकभाजां विषादनायैव ॥ १११ ॥
त्रिवलीमयेन यौवनदर्वीकरवेष्टनेन किमपर्णे ।
भवदीयतनुपटीरव्रततीमध्यो विगाहते तनुताम् ॥ ११२ ॥
कथमतितरां कठोरैः करिशिरःकदलिकाण्डतूणीरैः ।
जननि जघनोरुजङ्घं तुलयन्ति धुतोपमानसङ्घं ते ॥ ११३ ॥

भवमहिषि तव पदाभ्यामिदमधरीकृतमिति ध्रुवं वेधाः ।
कलयति कमलमधस्तात्सर्वे कुर्वन्ति सत्समाचरितम् ॥ ११४ ॥
नखरनिकरच्छलोदितनूपुरहीरोपलप्रतिच्छायाः ।
अङ्गुलिदलापदेशाद्भान्ति भवच्चरणकिरणनिष्यन्दाः ॥ ११५ ॥
कमलकलहोद्यमो वा हिमगिरिहेलाविधानवाञ्छा वा ।
यमिहृदयवारिजस्थितिकलना वा तव पदं करोत्यरुणम् ॥ ११६ ॥
हंसास्त्वया मदालसविभ्रमगत्या विभीषितस्वान्ताः ।
मातः पयोदमालां प्रेक्ष्य भवच्छङ्कया पलायन्ते ॥ ११७ ॥
निर्माय निर्मले तव केवलशृङ्गारकन्दलैरङ्गम् ।
उडुराजखण्डमौलेरुपदीकुरुते स किं मनोजन्मा ॥ ११८ ॥

श्रुतिश्रमविनोदिभिः शुकरवैरभिव्यक्तया
पुरारिगुणसंपदा पुलकितैकगण्डस्थलम् ।
कदम्बविपिनान्तरे कलितसंनिधानं चिरा-
न्महः किमपि दृश्यते मरकतोपलश्यामलम् ॥ ११९ ॥

अनन्तरमुपसृत्य सुन्दरेशमारचितसंनतिरिदमभ्यनन्यत—

अभीष्टसिद्ध्यै हरिणाङ्कशेखरं विनौमि हालास्यपुरीविहारिणम् ।
विभोश्चतुःषष्टिविलासकारिणः कियन्मदीयावनकेलिकौशलम् ॥ १२० ॥
जरद्गवारोहणशीलिना त्वया कदर्थ्यते हन्त नरे(गे)न्द्रकन्यका ।
हयावलीविक्रयिणस्तवेश किं तुरङ्गमः कोऽपि बभूव दुर्लभः ॥ १२१ ॥
गिरिश पाणिषु माधुरयोषितां वलयभूषणमर्पयता त्वया ।
शफरदृक्करपल्लवसंपदा कथय तेषु कदापि किमीक्षिता ॥ १२२ ॥
उस्फूलसिन्धूदकरोधहेतुमृत्क्षेपकर्मावसरे विनम्रात् ।
संरोत गङ्गा यदि मस्तकात्ते का वा दशा स्यान्मधुरानगर्याः ॥ १२३ ॥
उरसिरुहद्वयरूपामुपहृत्य तव त्रिवर्गसंपत्तिम् ।
अजनि शफरेक्षणा स्वयमानन्दघनापवर्गसंसिद्धिः ॥ १२४ ॥

अथ निर्गत्य मधुरापुराद्धिगत्य च कवेरजां समरमृगयादलितदनुजसा-

रङ्गयूथमपि श्रीरङ्गनाथ परिकल्पितपूजापुण्यततिमपि गजारण्यपतिं चिरमु-
पास्य नि सृत सहचरलोकमवलोक्य वाक्यमिदमाख्यातवानवनीसुरशङ्कर ।

कलशार्णवान्तरङ्ग कावेरीसङ्गि मन्महे रङ्गम् ।
यदिह घनपीनतुङ्गे पुरुषो निद्राति भोगिपर्यङ्के ॥ १२५ ॥

चारुकवेरजाझरसमीरणपारणया पोपघने शयान भुजगेशमहाशयने ।
श्रीमहिलामनोज जलदामलधामनिधे स्व गुरु मङ्गल मम तरङ्गय रङ्गपते १२६
हृद्यमरुद्वृधाहृदयवर्तनसक्तमते प्रौढगजाटवीनटनपाटवरूढरुचे ।
साभृतरापदा विहितकम्बुविडम्बनया साधय बोधघ्न मामु मम चेतसि भूतपते ॥

अज्ञातापचयक्रम द्विजवरैराम्नायमाने रसे-
ऽप्यर्थे वारिदनीलमर्थमुदयन्मार्तण्डबिम्बारुणम् ।*
मूले सत्कुमारिकातटपरिष्कारस्य जम्बूतरो
रद्राक्ष फलमेकमीक्षणकृतामश्रान्ततृष्यामहम् ॥ १२८ ॥

ससारी स्यन्दनी वा जलधिरशनया लोचनी शेखरी वा
नेत्रा नीलोत्पलानामुदधिपरिवृढेनालयी तूणवान्वा ।
पर्यङ्की कङ्कणी वा फणिधरपतिना सत्वभूभृत्कुमारी
मध्यालङ्कारलीलावसतिरवतु मा देवतासार्वभौम ॥ १२९ ॥

वृद्धाचलाधिपमुपास्य ततो विपश्चि
दाराध्य शोणगिरिसङ्गिनमङ्गजारिम् ।
नत्वा विरिञ्चिपुरनायकमप्ययासी
न्यग्रोधकाननपुरीं निजवासभूमिम् ॥ १३० ॥

अनेकतीर्थाटनवैभवेन समापतन्तीं सशरीरबन्धाम् ।
काचित्तप सिद्धिमिवैष कन्यामन्या महीयानथ पर्यणैषीत् ॥ १३१ ॥

अनवगुणकलापैरन्यनारीदुरापै
रनुसृतनिजचित्त हैमवत्योरिवेश ।
द्वयमिदमनुरुन्धन्दक्षिण सारसाक्ष्यो
रधित मुहुरमान्तीमन्तरानन्दवृद्धिम् ॥ १३२ ॥

इति समरपुङ्गवकृतौ यात्राप्रबन्धचम्पूकाव्ये पञ्चम आश्वास ॥

षष्ठ आश्वासः ।

ताभ्यामसौ धर्ममणूदरीभ्यां समाचरन्संशयगोचरेषु ।
निर्धारणाय श्रुतिनिर्विशेषं प्रमाणमासीत्परमङ्गभाजाम् ॥ १ ॥
तस्य तीर्थभजनोचितयात्रामादिशन्निव सुदीधितिकल्पः ।
स्मेरपाटलपरीमलवीचीमोदितालिमुखरः समयोऽभूत् ॥ २ ॥
मल्लिकाकुसुमगण्डलगौरो मारबाहुमदमान्द्यविधायी ।
दीप्तचण्डकरदीधितिरागात्कालकाल इव कश्चिदनेहाः ॥ ३ ॥
ग्रीष्मसंज्वरकृतामतिपीडामञ्जिनीपतिरिवासहमानः ।
मेदुरामविरतं मिहिकाभिर्विव्यथः स्रुतदिशं विजगाहे ॥ ४ ॥
उत्क्षिपद्भिरटवीतरुकाण्डानुद्भटैरपरदिक्पवमानैः ।
भग्नरंहसि पतङ्गशताङ्गे द्राघिमानमलभन्त दिनानि ॥ ५ ॥
मेदुरे करसहस्रनिपीतैर्मेदिनीतलजलैरहिमांशौ ।
भारकुण्ठितजवे रथवाहैः प्रादुरास गरिमा दिवसानाम् ॥ ६ ॥
व्योम्नि दावशिखिधूमवितानैर्मारात्ने खरमरीचिहयानाम् ।
मार्गमार्गणकृतातिविलम्बाद्दीर्घतां समजय(गम)न्दिवसानि ॥ ७ ॥
अस्फुरच्छिखरिगह्वरगर्भव्यापिहेतिरटवीहुतवाहः ।
उद्गतैरिव विद्यन्निजधूमैरुद्भवं जलमुचामभिशङ्क्य ॥ ८ ॥
भायियैघुतलतापरिणत्यै बीजसंततिरिव प्रविकीर्णा ।
व्योमसीम्नि विपिनज्वलनानां विस्फुलिङ्गपटली विजजृम्भे ॥ ९ ॥
शोषितेष्विह जलेषु नितान्तं शेषलोकसलिलान्यपि पातुम् ।
दारुणैर्वसुमती करजालैर्दारितेव तपनेन पफाल ॥ १० ॥
प्रस्थितेन मधुमासनृपेण प्रापिता वनमहीशिबिराणि ।
पावकावलिरिव प्रचकाशे पाटलीकुसुमकोरकपङ्क्तिः ॥ ११ ॥
अंशुमालिकपिशाम्बरमध्ये व्यक्तिभाजि मधुवैरिणि कान्ते ।
अद्भुताय किमिदं यदमुष्मिन्नर्जुनस्य मुहुराप विकासः ॥ १२ ॥
माधवेन विहितोपचयानां मार्दवं किमन्यप्रकराणाम् ।
आजहार शुचिराशु निधातुं किं शिरीषकुसुमस्तबकेषु ॥ १३ ॥

दारुणातपभिया स्तनसीमामाश्रितं शिशिरमम्बुरहाक्ष्य ।
सान्द्रचन्दनरसैः किमरक्षन्शस्यते हि शरणागतरक्षा ॥ १४ ॥
तालवृन्तमभितो हिमधारास्यन्दनिर्भरसिताभ्रवलक्षम् ।
नृत्यति स्म निकटे युवतीनामास्यदास्यकृदिवैन्दवबिम्बम् ॥ १५ ॥
अम्बुजव्यजनमन्वमुखीनामाश्रयन्नपि मुहुर्मरुदासाम् ।
घर्मवारिकणजालमनुष्णात्का व्यवस्थितिकथा चपलेषु ॥ १६ ॥
पर्ययेण तपातमधोऽधो वापिकाजठरवारि विरेजे ।
चण्डभानुकरसज्वरभीत्या गन्तुकाममिव गर्भमवन्याः ॥ १७ ॥
उन्नदद्भ्रमरमुच्छ्रितपद्मं भासते स्म पटलं नलिनीनाम् ।
साध्वसात्करमुदस्य सवित्रे श्वसदात्मसरसामिव शोषम् ॥ १८ ॥
क्रीडितुं सरसि तीरगताना वक्रराजिररुचद्वनितानाम् ।
सादरेव जलजेषु विधातुं सर्वसंनहनसाहसकेलिम् ॥ १९ ॥
अम्बुगाहनकृतामबलानामङ्घ्रिपङ्क्तिरपनूपुरनादा ।
लक्ष्यते स्म सरसीरहलक्ष्मीमोषणाय भृतमूकदशेव ॥ २० ॥
प्रक्रमे सलिलकेलिकलाया नाभिदघ्नमपि सारसमम्भः ।
श्रोणिभिः पुनरुरोरुहदघ्नं सुभ्रुवामजनि संभ्रमहेतु ॥ २१ ॥
मापिते सरसि पद्ममुखीना क्षौममूरुकुचकुम्भनितम्बे ।
अब्जसंततिरधोमुखवीक्षा लज्जितेव लहरीषु मम(ज्ज)ज्जे ॥ २२ ॥
वीचिलोलमपहाय सरोजं वक्त्रसीमनि पतन्नपि यथ्या ।
षट्पदस्तदुपगूहनहृष्यच्चेतसा सहचरेण शशंसे ॥ २३ ॥
अङ्गना कलिलमम्बु सरस्याः कुर्वते स्म कुचकुङ्कुमपङ्कैः ।
रञ्जयन्ति विदुषामिव भावैराशयं किमु जलस्य मृगाक्ष्यः ॥२४॥
पादयावकमुरोजपटीरं चक्षुरञ्जनमपि क्षपयन्तम् ।
वीक्ष्य रोषविवशा इव हस्तैस्ताडयन्ति वनिता स्म तटाकम् ॥२५॥
कातयन्त्रकरवारिभरेण प्लाविते सति पयोधरकुम्भे ।
दह्यतो मृगदृशा मदनेन स्वेदमातपकृतं निममर्ज ॥ २६ ॥

अक्षमा अपि विहर्तुमगाधे कामिनां करगृहीतवलग्नाः ।
बालिकाः प्रसृतपाणिपदाब्जं पाथसि प्लवननर्म वितेनुः ॥ २७ ॥
कैशिके सलिलसंगिनि तासां कान्तिचित्रमजनिष्ट रसार्द्रम् ।
शुष्यति प्रचितशोषणमश्नोराङ्गजैर्नियमिते च निबद्धम् ॥ २८ ॥
नीलकुन्तलनियन्त्रितमल्लीसूनकन्दुकभरा सुदृगाली ।
वारिबोदरवलद्विधुबिम्बामावलिं क्षणरुचामनुचक्रे ॥ २९ ॥
अथैष पित्रोरमितैस्तपोभरैरुपेयुषोः स्वर्गमुपार्जितैः स्वयम् ।
गयाशिरःसीमनि कृत्यमास्तिकः स्वधर्म इत्याचरितुं समैहत ॥ ३० ॥
द्युसिन्धुकाशीतदधीश्वरेषु प्रारभ्य या बाल्यमनुष्य भक्तिः ।
करावलम्बप्रतिपादनं सा गयाप्रयाणाभिरतेरतानीत् ॥ ३१ ॥
लग्ने शुभे स निरगाद्रचितः सुरेन्द्र-
संतर्पणः सहजनिर्मलशीलशाली ।
दुष्कर्मधर्मितजनागमदूषितानि
तीर्थानि पावयितुकाम इवाखिलानि ॥ ३२ ॥
बलिभोजिबकोटयोर्जयात्प्रतिपत्राटनयोः प्रतिक्षणम् ।
किरणच्छलतोऽसितार्जुने किमभातां पुरतोऽस्य निम्नगे ॥ ३३ ॥
अनुपदमपरस्यदयमपरस्यपार्श्वतः सहसा विनिःसृतं धरणीतलादुपरि बाहुमध्यमादनतितुङ्गे नभसि विहितचङ्क्रमतया संनिकृष्टोदयामिष्ट…… मनक्षरमावक्षाणमदक्षिणभागविटपिशाखाशिखरविरचितोपवेशतया भजनीयदेशाभाविनीमधिताशुन्नतिमभिव्यञ्जयन्तं कमपि सशरीरं कलगम् ।
अम्बरे मण्डलभ्रान्तिमपदिश्य गरुत्मतः ।
समागतवतस्त्रातुं हरेश्चक्रमदृश्यत ॥ ३४ ॥
उद्यीव्रमाणिनयमरीचिकोर्मिहृद्यैसनीलच्छवि दुहकाङ्गी ।
वहींसत्तं धाम यशीन्द्रलोकद्दर्शनमेकं मतिमाननंसीत् ॥ ३५ ॥
स्थितस्य मध्ये शिवयोर्विभाति यत्कावली यस्य समं तदासैः ।
बिम्बालिरिन्दोरिव भानुमालिस्पर्शोभृतद्वादशबिम्बदस्य ॥ ३६ ॥
अभिवन्द्य च तं भगवन्तमिदं नयनमनानीत् ।

गन्धश्रेणीसान्द्रकह्लारचूड मन्दस्मेरोदारवक्त्रारविन्दम् ।
अन्तर्वाणिध्येयमाम्नायगेय वन्दस्वैन वाणि वल्लीसहायम् ॥ ३७ ॥

दीनपालनमहाव्रतकल्पौ दीक्षितेयमधिहल्लकाचलम् ।
वैनतेयतनयाधिरोहिणी वासना विहरते षडानना ॥ ३८ ॥

कालिकागिरिशयोगसाधित गाढमग्निजठरे समाहितम् ।
गालित पयसि सौरसैन्धवे काञ्चनीकृतशराटविं रुचा ॥ ३९ ॥

शीलितोपचयकृत्तिकापय स्वीकृतिप्रकटितातिवैभवम् ।
व्यालिहामि मनसा भवामये मज्जता किमपि पारद रसम् ॥ ४० ॥

इहेश्वरादेकमुखप्रवृत्तेरीपलभा ··· रीरितार्थे ।
कह्लारशैलाधिपतिं कथ वा भजन्ति सदर्शितबाहुमुख्यम् ॥ ४१ ॥

कनीनिकाशुभ्रथिताक्षमाला षडाननी भाति षडाननस्य ।
अम्भोरुहश्रेणिरिवासिताब्जदलस्रजा गाढतर निबद्धा ॥ ४२ ॥

त्रिसध्यमाविष्कृतरक्तसध्यके धराधरेऽस्मिन्निदमन्यदद्भुतम् ।
यदेकनालोपरि शश्वदीक्ष्यते समप्रबोधाकलिता षडम्बुजी ॥ ४३ ॥

कलापिनीना नटनान्तरेषु कपोल[डो]दोलायितकुण्डलानि ।
नालीकसदोहनटन्मिलिन्दपालीकनभ्रूपरिशोभितानि ॥ ४४ ॥

कह्लारमाघ्रातुमिवेक्षणाभ्या गाढावलीढश्रवणान्तिकानि ।
नेत्रद्वयीसीमनिबद्धसेतुनर्मस्पृशा नासिकयोज्ज्वलानि ॥ ४५ ॥

न्यस्तस्य दृग्दोषनिवारणाय विन्दो सगन्ध तिलक वहन्ति ।
प्रियाधरोष्ठामृतपारणायामुच्चैरहपूर्विकया युतानि ॥ ४६ ॥

उपासकेभ्यो युगपत्प्रणीतषड्दर्शिनीव्याकृतिसभ्रमाणि ।
कह्लारसौरभ्यघने कपोले स्वैर शिवाभ्या कृतचुम्बनानि ॥ ४७ ॥

रसाभिलाषेण रह प्रियाभ्या पर्यायपीताधरपल्लवानि ।
धन्यो जन पश्यति तारकारेर्मुखानि मुग्धस्मितकन्दलानि ॥ ४८ ॥

कुमारमीडे गुरुगर्भयोगादुपोढसरम्भमुपेत्य यस्य ।
लीलामरालेन भवान्यिचेष्ट स्वस्रो जयस्तम्भ इवावतस्थे ॥ ४९ ॥

अहरलङ्घ्यविधेयशतस्य वा निशि निषेवितत्तल्पतलस्य वा ।
उपनिषन्मुखवेद्यमुदेतु मे मनसि षण्मुखवारिरुहं महः ॥ ५० ॥
नीलावनीभृन्निभसौरिधाटीतुलायकोलाहलतुसधैर्यं ।
काले स्मरामः करुणाभिरामविलोकनं तारकवैरिणं तम् ॥ ५१ ॥
यल्लीवक्त्रारविन्दे मदकलमधुपव्रातसंपातरीत्या
तुल्यानां जृम्भणानामहमहमिकया गुम्भने दुर्निवारैः ।
ह्यामुद्भावयद्भिर्दिशि दिशि········पङ्क्तिमिन्दीवराणां
कल्याणं वः कटाक्षैः कलयतु करुणाशालिभिः कार्तिकेयः ॥ ५२ ॥
स्तनंधयोऽपि शर्वाण्या दैत्यं दारितवानसौ ।
स्यतो धारयतः शक्तिं किं वयो गण्यते बुधैः ॥ ५३ ॥
सर्वागमोपदेष्टापि शबरीमयमग्रहीत् ।
अस्य भिल्लाग्रणीसूनोरथवा किमनौचिती ॥ ५४ ॥
श्रयत भवानीतनयं शतमखरिपुजैत्रवैभवानीतनयम् ।
निरवधि कारुण्येन व्याप्तं हृदि वपुषि चाधिकारुण्येन ॥ ५५ ॥
सेनानीरजनि करश्रेणिपराभूतशोणनीरजनिकरः ।
परनलिनीरजनिकरः परमशिवानन्दबाष्पनीरजनिकरः ॥ ५६ ॥
मशस्तलीलाविभवोपनीतकुशस्थलीकूलझरीविशेषम् ।
कृपालतोपघ्नमुपात्तवेधःकपालमाराधयदेष देवम् ॥ ५७ ॥
इमं परीपाकमिहापराधादम्भोजयोनेरपि पश्यतेति ।
अदःकपालेन सुरालयेषु भिक्षामटन्यः प्रकटीचकार ॥ ५८ ॥

तदनु निःशङ्कं मूधरोत्सङ्गसीम्नि क्षीलित········गासादितरागसंपद्विशेषतया शैलेशतनुभुवा सततमाकेशचरणमवलोकनीयरामणीयकं नागेशमभिवन्द्य नरपालमन्दिरद्वारमासाद्य दूरादेव नृपसदसि मागधकुलनिगद्यमानमभिजातपद्यजातमार्यमिश्रः सहर्षमश्रौषीत् ।

वर्षस्वामितसार सारसविधेयालोकलोकत्रयी-
गेयप्रौढिविशेषशेषनिभवाङ्मपुण्यपुण्याकृते ।

सग्रामाङ्गणधीर धीरत सता कोदण्डदण्डक्षत-
प्रत्यर्थिस्मयसङ्गसगतमहीरामाक माकप्रभो ॥ ५९ ॥

धनजयकृता दानेनानेकदिक्तटलङ्घन
स्यदनिरतया कीर्त्या नीत्या निरस्तकलङ्कया ।
सरसकलया चात्रे सतानरत्नचिरन्तना
ननघचरितान्राजञ्जेगीयसे क्षितिनायकान् ॥ ६० ॥

जनितनलिनीशङ्काद्वेशे हरिन्मणिकुट्टिमे
शशधरकलासुधद्बिम्बा निशासु समतत ।
बिसधिपणया केलीहसा स्पृशन्ति मुखाञ्चले
प्रतिक्षुभगृह यत्तन्माकप्रभो तव वैभवम् ॥ ६१ ॥

श्रीमन्माकक्षितिधर भवत्कीर्तिशैलूषयोषा
मेरुस्तम्भे भ्रमणनटनप्रक्रिया सविधत्ते ।
तस्यास्ताटङ्कविलसितजुषो रत्नताटङ्कभूषा
युग्म बिम्बच्छविरिति शशीत्यम्बरे बम्भ्रमीति ॥ ६२ ॥

चक्राणा विदधाति सोऽतिकदन तेषा शरण्यस्त्वय
राजा विष्णुपदाक्रम वितनुते सोऽय तु तस्यार्चक ।
आस्ते सोऽहिमयैकभाजनमय तस्यानभिज्ञस्त्विति
त्यक्त्वा त परिकर्ममौक्तिकमिषात्त्वामेव तारा श्रिता ॥ ६३ ॥

तव माकविभो धराधिपैर्वलेपादकृताभिवन्दनै ।
इह दिव्यपि चानुभूयते बहुशालीपरिरम्भसभ्रम ॥ ६४ ॥

पार्श्ववर्तिजनताप्रतिबिम्बव्याजतो विमतराजसमाजम् ।
सङ्गरे कवलित किल धत्ते साल्व माक तव पाणिकृपाण ॥ ६५ ॥

वमथुनिकरेण वसुधा सिञ्चति माकनृप तव गजश्रेणी ।
अरमपटाहतिलीलानिर्मितमूर्छानिवारणायैव ॥ ६६ ॥

श्रीमाकक्षितिपालशेखर भवद्वेतण्डकर्णानिलो
नेष्यत्याशु युतोऽपि तूलपटलीरीत्या द्विद्वारणान्

आलोच्यैवमचञ्चलस्थितिकृते तेषां किमम्भोजभूः
क्षोणीमण्डलभारमेव सततं कुम्भस्थलीषु न्यधात् ॥ ६७ ॥
घाटीहेलासु घोटीखुरपुटदलितक्षुण्णरेणूपगूढै-
र्दानैर्जम्वालितासु त्रिदशकरटिनां गण्डभित्तिस्थलीषु ।
लग्ना नीलारविन्दच्छदरुचिरलिनां धोरणी कज्जलेन
व्यालिप्ता जैत्रवर्णावलिरिव भवतो भासते माफनूप ॥ ६८ ॥
अध्यासीना समन्तात्क्षितिभरणकृतामावलिः सिन्धुराणां
वातैरश्रान्तलोलश्रवणपुटमहातालवृन्तोपजातैः ।
काष्ठानामन्तराले किमपि विसरतस्त्वत्प्रतापानलस्य
प्रायः संधुक्षणानि प्रणयति नितरां माफराज क्षितीन्द्र ॥ ६९ ॥
विपक्षलक्ष्मीः क्रियते त्वया महीवराहबन्दी प्रमदासमञ्जसा ।
रिपुं च माफेन्द्र करोषि किंकरं वराहवे वीप्रगदासमञ्जसा ॥ ७० ॥
प्रकल्पते त्वत्करवालयष्टी रविप्रभावारिजयापनाय ।
न हि प्रवर्तेत कदापि लोके रविप्रभा वारिजयापनाय ॥ ७१ ॥
इह महिमा कनकपटः पट्टघटित""ठा सारवमाफ नकपटः ।
विहरति मानवलोके विलसत्कारुण्यवीचिमानवलोके ॥ ७२ ॥
पापन्नकण्ठीरवतः प्रथितादुदितं दिशासु कण्ठीरवतः ।
एत्य धरा माफेशं ह्यप्यति हटकृद्वैरिरामाकेशम् ॥ ७३ ॥
वारिजनाभी राजति सोऽयं कृतसत्वारिजनाभीः ।
जहिहि स्कन्धावारे वसतिं तरसा दिगन्तिकं धावारे ॥ ७४ ॥
हेमाकल्प क्षमाकण्ठकहरपटिमा कल्यरामाकटाक्ष-
स्तोमाकाषः सुमाकर्कशभणितिललामा कथं वर्ण्यतेऽसौ ।
क्ष्माकर्पूरप्रमाकल्पनलटहयशःप्रौढिमा कर्मरूढ-
स्थेमा कारुण्यसीमा कनदनघगुणो माफराजक्षितीन्द्रः ॥७५॥

अनन्तरमयमवनिभृद्दन्तिकादभिमुखमापतद्भिरागच्छत सरयमाशिषो व-
दत नृपतेः श्रीमदवलोकनकुतूहली नृपतिरयमास्त इति निवेदयद्भिरावसरि-

कपुरुषैरावेद्यमानसरणिरवगाह्य धरणीशमन्दिरमतिलङ्घ्य कतिचिदपि कक्ष्या-(क्षा)न्तराणि कविबुधबन्धुसचिवमित्रसामन्तमण्डलीशोभिनि काञ्चनास्थानमण्डपे मणिमयचतुस्तम्भमध्यमवितर्दिकायामतिमृदुलतूलमालिकामांसलममृतफेनपटलीविनिर्मलमादिपुरुषमिव शेषमास्तरणविशेषमध्यासीनं वारविलासिनीकरकमलडो(दो)लायमानचामरद्वितयमासुरपार्श्वभागतया कलशजलधियुगलीकल्लोलयुगला''''रुल्लसन्तमरविन्दिनीबन्धुमपह(स)न्तं कौसुम्भपटखण्डपरिकलितमालतीप्रसवशालिना मौलिबन्धेन संध्यामयूखसंवलिततारकमम्बरतलैकदेशं विडम्बयन्तमशोककुङ्कुमस्थासकपिशङ्गमरीचितरङ्गितां मूर्तिमावृण्वता कण्ठाभरणमुक्ताफलदीप्तिवृन्देन मन्दाकिनीपूरपतनगौरवपुषं सुमेरुमवधीरयन्तं पीतवसनपरिपीतकटिप्रदेशतया पुष्करजालसंवृतनितम्बभूमिमुदयक्ष्माभृतमधिक्षिपन्तं फलकल्पशाखिनः किसलयान्तरालकन्दलितेन कुसुमकोरकेणेव कुरुविन्दमध्यवर्तिना कुलिशोपलेन परिशोभमानमहं वीरकङ्कणं मणिबन्धसीमनि महनीयमुद्वहन्तं मकरध्वजमिव मार्गणोपदर्शितसौमनस्यं पाकशासनमिव प्रतिरोधिबलविभेदनं पुरवैरिमित्रमिव समस्ताभिलषितपूरणधुरीणसंनिधानं द्वितीयहरमिवातृतीयलोचनमन्यमिव शतमन्युमितरमिव वदान्यपादपमपरमिव कुसुमाकरमत्रिकुलपवित्रीकरणकुशलचरित्रसंपदं कोनाम्बागर्भकुञ्जगृहसंचारकेलिपञ्चाननं पापजगतीपतिप्राचीनसुकृतपरिपाकं माकनरलोकनायकमवलोकयन्मनस्येवमकरोत् ।

यो भोगिप्रवरोऽप्यजिह्मचरितः श्रीशोऽपि ह्यप्यद्रूपो
भास्वानप्यरिदुःसहः कुवलयाधीशोऽप्यदोषाकरः ।
सर्वज्ञोऽप्यनलीकदृष्टिरचलोऽप्यक्षीणपक्षावलिः
सोऽयं माकनृपो विचित्रमहिमा स्वैरं विजेजीयते ॥ ७६ ॥

तदनु संमदादुत्थाय पार्थिववरिष्ठेन समुचितासनविष्टरे समुपवेशितोऽयमर्तिविचक्षणो दक्षिणमुद्यम्य हस्तं नृपकुलमणेरस्य नमदखिलसामन्तभूपतेराशिषं प्रायुङ्क्त ।

कल्याणाकर माकराज भवते कारुण्यसंशीलना-
दार्द्रैरेष जनार्दनो वितरतादालोकनैः संपदम् ।

पाराचारसुतासनाथमभितो वाह्यान्तरान्तःपुरं
दोष्णां यस्य चतुष्टयी चिरधृतैः पातीव दिव्यायुधैः ॥ ७७ ॥
लक्ष्मीनित्यविहारकैटभरिपो चक्रावलीरञ्जन-
च्छायावल्लभ कीर्तिवृद्धिकलनाधाराधराभ्यागम ।
दोषापोषणपूर्णचन्द्र सुमनोविस्फूर्तिपुष्पाकर
श्रीव(म)न्साल्यकुमार माक भवतः श्रेयांसि संप्रार्थये ॥ ७८ ॥
सकलभवद्गुणसङ्कश्लाघाचातुर्यविवृतिकलनायाम् ।
जगति फणिराज एकः शिष्यत इत्येव शेषतां धत्ते ॥ ७९ ॥
पारं भवद्गुणौघानां वाणी मजतु मे कथम् ।
अपर्याप्तस्थितिर्येषामपि ब्रह्माण्डमण्डलः ॥ ८० ॥
तदपास्य भवद्गुणावलीस्तवधाटीरुचिमेतदद्य नः ।
पृथिवीश भृशं निवेदने प्रकृतार्थस्य मनः प्रवर्तते ॥ ८१ ॥
स्थितिगुप्तिमलब्धसंगतिं क्षितिपालाधिगमे फलं विदुः ।
मनुजेशधुरीण मादृशामुचितं तेन तवोपसर्पणम् ॥ ८२ ॥
भुवि ते तु बुधैरवस्थितैरनवाप्तं न किमप्यवेक्ष्यते ।
अपहाय पुरा कृताधिकं सुकृतं दुष्कृतशोधनक्षमम् ॥ ८३ ॥
तदिमां मनुजादिबन्धुतां तव पार्श्वे विनिवेद्य सांप्रतम् ।
अविमुक्तमुपासितुं व(वै)रविमुक्तं वयमाद्रियामहे ॥ ८४ ॥
परिपाहि मदीयबान्धवान्विषये ते विहितस्थितीनिति ।
कथनं खलु सिद्धसाधनं क्षितिसंत्राणकृतस्तवान्तिके ॥ ८५ ॥
इति तमभिलपन्तं हृष्टचेता नरेन्द्रो
भृतमुदमुपचारैः प्राहिणोदत्युदारैः ।
पथि खलु विदधानो भावबन्धं विशुद्धे-
र्वल्लवदिह सपर्याभाजनं कस्य न स्यात् ॥ ८६ ॥

अथ विनिर्गत्य निःशङ्कदुर्गभुवो निखिलदुर्गतजनस्वर्गतरोरनर्गलशौर्यवि-स्मारितभार्गवस्य भर्गतनुभवस्येव दुर्गामगादलब्धविविधाभिलषितवर्गस्य भो-गिवरनिराकृतिपटुविवेकशालिनो माकराजमहीपाकशासनस्य सुजनतात्रिरे-

कमनुचिन्त्य मुहुर्मुहुर्मुदमनुसंदधानस्तदवलम्बिभिरेव वचनगुम्भनैरनुचरसमाजमपि सभाजयन्सरोजलोचन इव सहचरीद्वयेन कियद्दूरमिव गत्वा स लब्धवर्णः सुवर्णमुखरीं निर्वर्णयन्निदमवर्णयत। इयं खलु

हुंकृत्य भृङ्गनिनदैरुपगृह्य वीची-
हस्तैः शिशूनिव जनानदसीयपङ्कम्।
प्रक्षाल्य हंससिलैः परिसान्त्वयन्ती
मोदं प्रसूरिव मुहुर्मुहुरातनोति॥ ८७॥

उत्तरेण सरिदुत्तमामिमां तुङ्गशृङ्गदलिताद्युसिन्धुना।
चक्षुषोरुपदया चिराय नो भूयते भुजगराजभूभृता॥ ८८॥

अत्र कुञ्जगृहासीनकेलिकाराङ्कलालिताः।
विष्णोः कर्माणि गायन्ति विद्याधरमृगीदृशः॥ ८९॥

अहो वृषधरमहीपतेरमुष्य महिमा।

पङ्गूपनीतैरिह सत्प्रसूनैः कुणिः स्रजो गुम्भनमातनोति।
अम्भोजनाभस्य कथामवाचा प्रस्तूयमानां बधिरः शृणोति॥ ९०॥

अथ तदानीं

पद्मासद्मायमाने मणिमुरसि वहन्कौस्तुभं वास्तुभूमि-
र्भासामासारदानोन्मुखघनसुषमागर्वनिर्वापिकानाम्।
स्तुत्यः श्रुत्यावलीभिर्नियमधनजनस्वान्तकान्तारलीला-
कुम्भी कुम्भीनसाद्रेरधितटममुनालोकि लोकैकनेता॥ ९१॥

असौ पुनरुरसा विद्राङ्कटेन विधृतवनमालिकं वेङ्कचे(टे)शमभिवन्द्य निर्मलमनाः सपरितोषमिदमभाषत।

साधूनां हृदयान्तरालसरणौ पुष्णन्परिष्कारतां
कुक्षेः सीमनि दर्शनीयविभवां कुर्वञ्जगन्मण्डलीम्।
आल्यामञ्जनभूभृतो निजतनुच्छाया····रं त्वर्थय-
न्सोऽप्यास्ते मणिरिन्दिराकुचतटीशाणोपलोत्तेजितः॥ ९१॥

फलेन्दीवरयोरनङ्गशरयोरुत्तेजिते यद्दृशौ
मध्यो यस्य समस्तशब्दकुदनामाणिक्यशाणोपलः।

यत्राभीसरणिश्च सूक्तिजननीश्वश्रूपदस्थायिनी
पायान्मां हृदयंगमस्मरकलातत्वं तदेतन्महः ॥ ९३ ॥
अञ्जनाचल······सर्वैरपि जनैरयम् ।
तटे गुहतटाकस्य मुकुन्दो मुहुरीक्ष्यते ॥ ९४ ॥
अवतंसेन विदुषां मशशंसे ततोऽमुना ।
स्वामिपुष्करिणीतीरभूमिभूषामणिः····॥ ९५ ॥
अङ्घ्रिप्रभिन्नतटहाटकशैलशृङ्गरिङ्गद्रजोनिचयकुङ्कुमलिप्तगात्रः ।
घोणाहताम्बुनिधिदुन्दुभिघोषहृष्टः पायान्महीपरिणयाभिमुखो(वराहः) ॥९६॥
अम्भोनिधेरलघुनिश्वसिताभिपङ्काद्भिभ्राम्यतो भ्रमिविलोकनकैतवेन ।
पृथ्वीपुरःप्रणयिनोचितभूपरीक्षां कुर्वन्निवादिमकिटिः कुरुतां मुदं नः ॥ ९७ ॥
(व्या)धूतदेहरभसव्यपसार्यमाणा-
माशासु वारिलहरीमपदिश्य सिन्धोः ।
जीयात्स्वजन्निजसमागमभाविपृथ्वी-
व्रीडापनोदनतिरस्करिणीं वराहः ॥ ९८ ॥
आद्यं नमामि··········भजन्समुद्रो
मद्रोमकोटिषु कुशाग्रहिमाम्बुरीतिम् ।
तत्कालसंगतधरापरिरम्भकर्म-
घर्मोदबिन्दुविहृतिं घटयांबभूव ॥ ९९ ॥
अम्भोधि कूल··········चोरदैत्य-
मुस्ताक्षतिप्रभवमोदपरंपराभिः ।
भूदारतां प्रकटयन्पुरुषः पुराण-
स्तत्तादृशीमिह तरङ्गयतु श्रियं वः ॥ १०० ॥
कोलस्तनोतु कुशलानि चिरंतनो मे
येन क्षितौ प्रथममीषदुदञ्चितायाम् ।
अस्या विषादविगमाच्छ्वसितैरिवाब्धे-
रह्नाय बुद्बुदकदम्बकमाविरासीत् ॥ १०१ ॥

आधारधुर्यं जगदण्डकपालवन्ति
पाथोमिषेण फणिमन्दिरमण्डपस्य ।
उर्वीशिलामुपरि निक्षिपता व्यतानि
येनाम्बुमानमिव तेन वयं सनाथाः ॥ १०२ ॥

प्रान्तक्षरज्जलधिवारिभरामुदस्य-
न्घोणाञ्चलेन धरणीं कुहनावराहः ।
तादृक्कृतिव्यतिकरश्रमवारणाय
धारागृहान्तरमिवाधिगतः पुनातु ॥ १०३ ॥

भद्रं शुभानि विदधातु महावराहो
दंष्ट्राहितेन विलसन्वलयेन धात्र्याः ।
संरक्षणादिव चराचरमण्डलीना-
मासादितेन महतातपवारणेन ॥ १०४ ॥

अङ्कं महीवरतनोरधिरोपिताया
व्यापारयन्निजदृशा वदनारविन्दे ।
आद्यः पुमानभयमुद्रिकयादसीय-
मस्यन्हठोद्धरणभीतिमिवावतान्नः ॥ १०५ ॥

भवाब्धिरूरुद्वयसो जनानां पदाब्जमेतद्भजतां ममेति ।
वक्तीव यः सक्थिनिवेशितेन वरप्रदेनापि कराम्बुजेन ॥ १०६ ॥

तदनु शेषाचलभूपामणेररविन्दलोचनस्य चरणारविन्दपरिचरणपुण्यपरिणतेरिव नयनसरणिमवगाह्मानमन्तिकनिष्यन्दमानसिन्धुपवनकन्दलमासतुन्दिलशिथिलबन्धस्य फणिराजपरिकर्मणः प्रतिक्षणटढीकृतौ कृतदक्षिणं दक्षिणकैलासकटकतटसीमनि शिलावटमूलबद्धरति कालहस्तिपतिमासेचमानो भूदेवानन्दनः सानन्दमिदमवादीत् ।

अग्रे लूतामथितपटलीकल्पितच्छायमास्ते
सिक्तं दन्तावलकरजलैरर्चितं भोगिरत्नैः ।
भिल्लाधीशोपहृतपिशितामोदवक्त्रारविन्दं
भाग्यं पृथ्वीधरपतिसुता ····योरादितत्वम् ॥ १०७ ॥

पायादपायरहितं परिणम्रमुक्ता-
दायादकायमतिवेलदयाविधेयम् ।
दूरे चिरंतनगिरां दुरितापहारि
पारेसुवर्ण…………कटं महो नः ॥ १०८ ॥

ब्रह्मादयोऽपि भवदाप्तिकृते यतन्ते
यत्नं विनापि ययुराटविकादयस्त्वाम् ।
अतः कृतान्तविजयिन्नतिचित्रशीलं
त्वां मन्महे न सुलभं च न दुर्लभं च ॥ १०९ ॥

मत्स्यप्रपुष्करपयःकलिताभिषेके
नागे नटद्गुणततावपि लूतिकायाम् ।
प्रीतिस्तवास्तु भगवन्नभवत्कथं वा
लुब्धद्विजिह्वविषयः प्रणयानुबन्धः ॥ ११० ॥

अन्योपचारविधिरस्तु महानणुर्वा
भावत्कहृत्पदमान्तर एव भावः ।
गौरीश ते मणिगुणप्रतिपादनेन
प्राप्तौ गतिं किल समां फणितन्तुवायौ ॥ १११ ॥

त्वद्भावतोऽपि तुहिनांशुकिशोरमौले
धन्या भृशं भवति तावकभक्ततैव ।
श्रीकालहस्तिपुरसीमनि यत्त्वयापि
भक्ताग्रिमस्य जगृहे फणिनः स्वरूपम् ॥ ११२ ॥

निर्मोकपट्टसितमङ्गमसह्यवेगः
क्ष्वेलानलो दुरवबोधतरं पदं च ।
सर्वं यतः सममहेर्भवतश्च शूलि-
न्नन्योन्यरूपपरिवृत्तिरतः किमासीत् ॥ ११३ ॥

देव त्वया यदिह दक्षिणरौप्यशैले
व्यालद्विपेन्द्रतनुरष्टविधा वितेने ।

तद्युक्तमेव कलये तव नीलकण्ठं
पञ्चाननं च यदुशन्ति भवन्तमार्याः ॥ ११४ ॥
घोरस्वभावजटिलः क वनेचरेन्द्रः
शान्तोपसेव्यसरणी सुगमा क मुक्तिः ।
अन्योन्यमेलनविधावनयोः प्रवीणा
तत्तादृशी जयति देव तवानुकम्पा ॥ ११५ ॥
प्रालेयभानुशकलादपि पादुकाया-
माकाशसिन्धुसलिलादपि वक्त्रतोये ।
देवीमुखामृतरसादपि दष्टमांसे
को वा गुणस्तव कुतूहलहेतुरासीत् ॥ ११६ ॥
हातुं पुलिन्दपतिरात्तकिरातभाव-
मासीद्भवन्तमधिगम्य महाकिरातः ।
किं कालहस्तिनगरीश तदद्भुताय
प्राग्वासना बलवती खलु देहभाजाम् ॥ ११७ ॥
अज्ञानरार्चनविधेरपि ते गरीयः
पादारविन्दपरिपूजनमेव शम्भो ।
दत्त्वा मुखे दृशमगाद्विपमेक्षणत्वं
भिक्षुः पदे तु हरिरास सुदर्शनोऽभूत् ॥ ११८ ॥
व्याधः समर्पयतु नाम विलीढशेषं
मांसं विवेकविरहेण मनोभवारे ।
अङ्गीकृतं कथमिदं भवताथचैत-
त्संभाव्यते त्वयि वनेचरसार्वभौमे ॥ ११९ ॥
पाणिग्रहव्यतिकरादुपरि प्रजाना-
मुच्छिष्टसंकरमुशन्ति जना जगत्याम् ।
प्रागेव मुक्तिपरिणीतिविधेरयं या-
मासील्किमेष शबरागमसंप्रदायः ॥ १२० ॥

स्पृष्टं शिरः शबरपादुकयेति मन्ये
तस्मिन्नमर्त्यतटिनीं त्रिमृषे तथापि ।
दष्टामिषग्रहणदर्शितचापलस्य
नेहास्ति कापि तव निष्कृतिरन्तकारे ॥ १२१ ॥

गङ्गागाण्डिवचापयोर्मदभरक्षेपाय चूडापदे
गण्डूषाम्बु च पादुका च शबरोत्तंसस्य वव्रे त्वया ।
पञ्चाशस्मयभञ्जनाय दृगपि मत्यादृदे कस्य वा
दर्पापाकृतये महेश जगृहे दष्टावशिष्टामिषम् ॥ १२२ ॥

त्वन्मस्तकाहितपदन्यसनादिदोष-
संशोधकस्तदृते शबरो बभार ।
चर्माम्बरं कटितटे भसिताङ्गराग-
मङ्के कपालमधिपाणि जटाश्च मौलौ ॥ १२३ ॥

सन्तु प्राणिवधैकतानमतयः शश्वन्मदान्धीकृता
जिह्मव्यापृतयोऽथवा जनिभृतः स्फारीभवद्भ्रान्तयः ।
मुक्तिस्तान्वृणुते स्वयं यदि कृपा मुग्धेन्दुचूडाल ते
तत्र व्याधगजाहिकीटपतयो दृष्टान्तकाष्ठापराः ॥ १२४ ॥

यामि प्रीतिमहं परान्नभजनैरुच्छिष्टभोजी भवा-
न्मूर्ध्नाहं चरणौ स्पृशामि धनिनां त्वं पादुकाशेखरः ।
सेवेऽहं घनपापकर्दमनदीं त्वं वक्त्रतोयाप्लुतो
युक्ता किंनु मदीयदोषगणना श्रीकालहस्तीश ते ॥ १२५ ॥

सत्कर्माचरणात्मिकां प्रथमतः संपाद्य नान्दीं ततः
प्रादुर्भाव्य समस्तभक्तिगरिमप्रस्तावनाकौशलम् ।
द्रागुत्सार्य तमःपटीमथ वृते दीपेन विद्यात्मना
चित्ते मे नटनं विधास्यसि कदा श्रीकालहस्तीश्वर ॥ १२६ ॥

गण्डूषाम्बुनिमज्जनाय यदभूद्गङ्गावतंसस्य ते
चूडालङ्कृतिकल्पनाय विधृतज्योत्स्नावतः पादुका ।

तृप्त्यै भक्षितशेषमामिषमपि त्रैलोक्यकुक्षिंभरे-
विंद्याधीश मुदे तवास्तु तदियं वाणी लघिष्ठापि मे ॥ १२७ ॥
भिल्लाग्रणीचरणपल्लवपादुकायै
सेयं क्रियासमभिहारवती नमस्या ।
वेधः करोटिविधुखण्डवियन्नदीनां
सेहे न या गिरिशशेखरताभिमानम् ॥ १२८ ॥
अस्त्येव यद्यवतरेन्मम दृष्टिमार्गं
नैवास्ति चेन्न तटिनीभरणं घटेत ।
इत्थं विधेर्विमतिमीश किरीटलक्ष्म्या
यस्याः स्मृतिर्हरति सावतु पादुका नः ॥ १२९ ॥
त्रातं यया हरजटावनचारकेल्यां
वेधःशिरः प्रतिहतेः शबराङ्घ्रिपद्मम् ।
सा पादुका षडरिवर्गविनिर्जयाय
संनद्धतां भवतु संप्रति नः शिरस्सु ॥ १३० ॥

अपि च—

जगन्मण्डलीयं त्वयि स्वप्रकाशे नटन्ती रवेरंशुजाले नदीव ।
अविद्याविलासाकृतिर्विद्यया ते भव··········भवत्यन्तकारे ॥ १३१ ॥
मनोहारिशब्दादिभिर्व्यज्यमानानहं किंचिदालिह्य यस्यैव लेशान् ।
सुखत्वेन जानामि संसारपीडां तमानन्दवाराकरं त्वामुपासे ॥ १३२ ॥
······क्षणस्फूर्तिहेतुः सुखादिप्रपञ्चोऽपि सर्वप्रियत्वेन भाति ।
परप्रेमभारास्पदत्वेन तादृक्प्रमोदाकृतिप्रत्यगर्थोऽसि शम्भो ॥ १३३ ॥
न कर्तास्मि नानाविधानां क्रियाणां प्रसक्तोऽपि नैतत्फलास्वादनेषु ।
सदानन्दविज्ञानसान्द्रस्वभावो भवानेव सोऽहं भवामि स्मरारे ॥१३४॥
यथा मातृवाक्येन राधेयभावं परित्यज्य कर्णः पृथासूनुरासीत् ।
तथा तत्त्वमस्यादिवाक्येन जीवं समुत्सृज्य रूपं त्वमेवाहमस्मि ॥१३५॥
भवन्तं वदन्त्येकमेवाद्वितीयं प्रणीतेतरालापसीमावचांसि ।
अतः साधयेदावयोर्भेदमत्तामयं कल्पितः किं नु संसारबन्धः ॥ १३६॥

यथा शुक्तिकादेरिदंतानुविद्धं समारोपितं वस्तु सर्वं चकास्ति ।
तवानङ्गजेतस्तथा सत्तयेदं समालिङ्गितं दृश्यजातं विभाति ॥ १३७ ॥
गुणे कल्पितायाः यथा कुण्डलिन्या जनत्रासकम्पादिसंपादकत्वम् ।
तथा संसृतेरीश नानाविधार्थक्रियासाधकत्वं त्वदारोपितायाः ॥ १३८ ॥
त्रयीमौलिना देशिकस्यापि वाचा समावेदिता संगनिर्मुक्तता मे ।
न सा बाध्यते नाथ मिथ्याभिमत्या महारत्नदीपप्रभा वात्ययेव ॥१३९॥
असङ्गत्वधीरात्मनीयं मदीया हृवाधच कर्त्रादिभावप्रतीत्या ।
सुधांशूपले शुद्धतासंविदस्मि जपोपाधिकारुण्यबुद्ध्यैव नैति ॥ १४० ॥
सदा शुद्धबुद्धो विमुक्तस्वरूपस्त्वमेतादृशोऽहं च तर्कागमाभ्याम् ।
अभेदेऽपि सत्यावयोरन्तरात्मन्नहो मे सुखस्फूर्तिरल्पेयमास्ते ॥१४१॥
विरामेण सर्वेन्द्रियव्यावृ(पृ)तीनां सुषुप्तावपि क्षीणशोकोदयायाम् ।
सहाविद्यया संमदस्यानुभूतिः सफाकोलमाध्वीकसेवासमाना ॥ १४२ ॥
विसर्पन्महामोहवेगान्धकारे निरस्नेह निःसारसंसारकूपे ।
भृशं क्लेशयित्वालमापन्नबन्धो शिव त्राहि मामीश कारुण्यसिन्धो ॥१४३॥
दुरन्तव्यथाहेतुभूतस्य दुष्टव्रणस्येव शस्त्रेण वैद्यो दयालुः ।
हृदो दुःसहं ग्रन्थिमीशान भिन्दन्प्रबोधेन मे देहि मोदातिरेकम् ॥१४४॥
वधूयुग्मवाताशनव्याधलूतानराधीशनत्कीरनागार्तिहारिन् ।
स्वं(?)मानयैनं जनिव्याधिपीडाविहस्तीकृतं कालहस्तीश देव ॥ १४५ ॥
सुपारद्रुते............................................................ ।
.............पवादं मया ते वितीर्णा कलामालिकेयम् ॥ १४६ ॥

एकदापि रचितेक्षणार्पणौ तौ तदैव भवताभिरक्षितौ ।
पार्वतीश पदयोस्तवानिशं दत्तदृष्टिमपि मामुपेक्षसे ॥ १४७ ॥

इत्यादि कीर्तयन्नयमत्यादरादुपेत्य धीराग्रिमो माराभियातिशरीरार्धहारिणीमाराध्य मातरं शतपत्रमुकुलसच्छायशताञ्जुषौ मस्तकभुवि हस्तौ निधाय समस्तोपनिषदर्थौघसुरभिलाभि.................................... श्रौषीत् ।

विष्वद्रीचि मरीचिमञ्चुचिभरे वीचीव वारां त्रयी
लोकानां यदवेदनादुदयते यद्वेदनान्मीलति ।

सत्यानन्दसुधासमुद्रलहरी सा काचिदेका ····
····················सि त्वमेव परमा ज्ञानप्रसूनाम्बिके ॥ १४८ ॥

नित्यानित्यविवेचनादिमजुषो नित्यैर्वचोगुम्भनै-
राप्तैः स्वस्य तवापि चैक्यमुभयोरापाततो जानतः।
कल्याणे तव रूपथे निपततः कस्यापि पुण्यात्मनो
जिज्ञासा त्वयि जायते भगवति ज्ञानप्रसूनाम्बिके ॥ १४९ ॥

विध्याद्यासु विधासु कापि भवतु श्रोतव्यवाक्ये विधा
····कर्मविचारक····घटनया प्रत्यग्विचारस्य च।
लिङ्गैः षड्भिरुपक्रमप्रभृतिभिर्वेदान्ततात्पर्यधी-
राधेया त्वयि तद्विमर्शफलया ज्ञानप्रसूनाम्बिके ॥ १५० ॥

कार्योत्पत्त्यनुकूलवेदनतया कर्त्र्या भवत्याः पुनः
साक्षादेव निदानतां त्रिजगतीद्वारं तु मायापरम्।
मृद्वत्तन्मसृणत्ववच्च कलशे सत्ताभृतस्ते तत-
स्तस्या जाड्यजुषश्च संगतिरिह ज्ञानप्रसूनाम्बिके ॥ १५१ ॥

कुम्भीजन्मनि कुम्भकार इव भूभर्तेव भूमिस्थितौ
हेतुः किं जगतोऽन्य एव जननस्थेम्नोरुपादानतः।
इत्थं भ्रान्तिमुदित्वरीं शमयितुं लक्ष्माहुरेकं जग-
ज्जन्मादित्रयहेतुतां तव बुधा ज्ञानप्रसूनाम्बिके ॥ १५२ ॥

पीलूनां द्व्यणुकादिकार्यनिवहप्रारम्भकत्वं यथा
नानारूपजडात्मना परिणतिर्यद्वत्प्रधानस्य वा।
तद्वन्निर्द्वयनिर्विकार········स्ते तद्द्वयासंभवा-
द्व्याप्तस्य सविवर्तस्य कारणमसि ज्ञानप्रसूनाम्बिके ॥ १५३ ॥

देहान्तःकरणस्पृहासुरनुरे रज्जूरगाद्याधिम-
प्रत्येकाध्यसने च जीववपुषा पुष्णास्युपादानताम्।
आकाशाग्निसमीरवारिधरणीमुख्ये तु साधारणे
रूपेणैव महेशितुस्त्रिजगती ज्ञानप्रसूनाम्बिके ॥ १५४ ॥

नित्यामस्तसमस्तभेदविसरां निस्सन्दचित्कन्दली-
मानन्दैकरसामगम्यसरणीमाम्नायवाचामपि ।
मूर्तिं जीवमहेश्वरौ विदधती मायावशेनात्मन-
स्तद्वद्वानुगता विशुद्धचिदसि ज्ञानप्रसूनाम्बिके ॥ १५५ ॥
निष्प्रत्यूहमिपरस्वरूपधिषणासंसिद्धसर्वज्ञता
सर्वोत्पादयितृत्वसर्वभुवनाधिष्ठातृताग्रेसरैः ।
कल्याणैरुपशोभितां गुणगणैः कैवल्यलक्ष्मीमयीं
दिव्यामीशदशामवाप्य जयसि ज्ञानप्रसूनाम्बिके ॥ १५६ ॥
मायाराहुविलीढबोधशशिना चक्षुर्मुखाक्षोदयं
नानावृत्तिसुखावलोकनमिलत्किंचिज्ज्ञताशालिना ।
उन्मीलद्बहुशोकवेगगरिमोद्विग्नेन जीवात्मना
बभ्रासीव भवाब्धिमज्जनविधिं ज्ञानप्रसूनाम्बिके ॥ १५७ ॥
छायावल्लभशीतभानुहुतभुङ्नक्षत्रतारादयो
भान्तीं त्वामनुभान्ति केवलचिदालोकातिरेकीकृते ।
चेतोवृत्तिपदार्थभेदकमयन्मातृप्रमामेयता-
धुर्या भासयसि त्वमेव भुवनं ज्ञानप्रसूनाम्बिके ॥ १५८ ॥
ऐक्ये व्यक्तिमुपागते सति बहिश्चक्षुदृगाभावश्च
मेद्धद्वृत्तिवशेन साक्षिविषयावच्छिन्नचैतन्ययोः ।
प्रत्यग्बोधमयेन दीपमहसा संबन्धमाध्यासिकं
प्राप्तेन प्रकटीकरोषि विषयाञ्ज्ञानप्रसूनाम्बिके ॥ १५९ ॥
सन्त्येवावरणादिशक्तिसहिता मूलप्रकृत्यंशका
मूलाज्ञानपदाभिषेकविधिना संभाविताः सूरिभिः ।
बाह्यैर्वृत्तिभिरीक्षणादिकरणोद्भूताभिरेकैकश-
स्तैरुच्चत्रिखिलव्यवस्थितिरसि ज्ञानप्रसूनाम्बिके ॥ १६० ॥
सामान्यग्रहणात्तदंशविषयाविद्यानिवृत्तावपि
स्वच्छुल्येतरभागसंवृतिविधाजाग्रत्तमोवस्थितेः ।

स्रग्वातंभयशुक्तिरौप्यमरुभूरिङ्खन्मरीचापगा-
पूर्वाध्यासशतानि संकलयसि ज्ञानप्रसूनाम्बिके ॥ १६१ ॥
अस्पृष्टैर्भ्रमवञ्चनादिकलयावच्छेदनिन्दापरैः
संसर्गाविषयप्रमैकजनकैश्छन्दोगिरां मौलिभिः।
दुष्टां प्राथमिकीं दृगादिजनितां बुद्धिं भिदागोचरा-
मस्यद्भिर्घटते तवद्वयमिति ज्ञानप्रसूनाम्बिके ॥ १६२ ॥
तत्त्वावेदनतश्चिरंतनगिरा प्रत्याचिताध्यक्षधी-
रज्ञानव्यतिरिक्तदोषमहिमाजन्यं प्रपञ्चास्पदम्।
नानाकार्यपरंपरास्वनुगतां सत्तां तवातन्वती
व्यत्यस्तामिव बोभवीति सफला ज्ञानप्रसूनाम्बिके ॥ १६३ ॥
आदर्शाहतिसंनिवृत्तनयनव्यालिख्यमानं यथा
कण्ठस्थं मुखमेव न प्रतिमुखं मिथ्या पदार्थान्तरम्।
चैतन्यप्रतिबिम्ब एव मुकुरे जीवोऽपि मायामये
त्वद्रूपादतिरिच्यते न हि तथा ज्ञानप्रसूनाम्बिके ॥ १६४ ॥
प्रक्षीणादिकथा समस्तजनिमत्प्रत्यक्षताशालिनी
विक्षेपप्रतिरूपशक्तियुगलीविख्यापितप्रक्रिया।
मन्दीभूतनिरुक्तिमार्गगमना मायाभिधा किंकरी
किं ते दुर्घटमेव नो घटयति ज्ञानप्रसूनाम्बिके ॥ १६५ ॥
स्वच्छन्दारुणबन्धुजीवसुमनोगुच्छाङ्कपालीवशा-
दच्छायां तु यथा सुधाकरमणावध्यस्यते शोणता।
संसारप्रवणस्वभावभरिताहंकारसान्निध्यतः
शुद्धायामपि संसृतिस्त्वयि तथा ज्ञानप्रसूनाम्बिके ॥ १६६ ॥
दृष्टिं सृष्टिमुशन्ति केचिदपरे दृक्तुल्यकालां तु ता-
मभ्रादिक्रमतस्त्वया प्रथमतः सृष्टस्य दृष्टिं परे।
लोकानां मृगतृष्णिकाम्बुलहरीसाधारणं सर्वथा
रूपं बोधनिवर्त्यमेव भवति ज्ञानप्रसूनाम्बिके ॥ १६७ ॥

---

१. निरुक्तीति भवेत्

जन्म श्रोत्रियसंततौ शुभतरे काले व्रतस्वीकृतिः
साङ्गाम्नायसमागमो गुरुमुखाद्दारग्रहः सत्कुलात् ।
निष्कामाचरणं च कर्मविततेर्निष्पद्यते कस्यचि-
त्त्वज्ज्ञानादरहेतुशुद्धि(द्ध)विषये ज्ञानप्रसूनाम्बिके ॥ १६८ ॥
वर्णी स्नातककाननस्थितिजुषां धर्मैश्च कर्मन्दिनां
संन्यासैरपि कर्मभिः समुचितैः पादोद्भवादेरपि ।
निष्पन्ना निखिलाप्यपूर्वपटली वेगाद्विलम्बादपि
त्वद्विद्याजननोपयोगमयति ज्ञानप्रसूनाम्बिके ॥ १६९ ॥
आधानाहितसंस्क्रियोज्ज्वलतरे निष्पादिते पावके
यागोऽपूर्वमिव त्वदेकविषयध्यानक्रियाशीलनात् ।
चित्तेनातिपचेलिमेन सहिता सा तत्त्वमस्यादिवा-
क्यत्साक्षात्कृतिमादधाति विमलां ज्ञानप्रसूनाम्बिके ॥ १७० ॥
ग्रीवायस्थितमेव रत्नखचितं ग्रैवेयकं विस्मृते-
रन्विच्छ(प्य)न्नुरुपो यथाप्तवचनादास्यैव तन्मोदते ।
अज्ञानस्थगितां सतीमपि तथा त्वद्रूपतामात्मनः
प्राप्यैवागमतः प्रहृष्यति सुधीर्ज्ञानप्रसूनाम्बिके ॥ १७१ ॥
श्रव्यन्तश्रवणे तदर्थमनने तद्भावनायां च स-
न्संप्राप्तादपरोक्षसंविदुडुपात्संसारपारं गतः ।
यावे[1]⋯⋯श्वविमुक्ति खेलति भजन्विम्बेशतां त्वन्मय-
ब्रह्मानन्दरसानुभूतिललितां ज्ञानप्रसूनाम्बिके ॥ १७२ ॥
वस्तुन्याहितचित्तमौपनिषदे वैधेषु वा जाग्रतं
नानाकर्मसु रक्षसीति यदयं नैसर्गिकस्ते गुणः ।
देहात्मभ्रमधूसरं जनमिमं त्यक्तात्मनीनक्रियं
यद्युत्तारयसे यशस्तव तदा ज्ञानप्रसूनाम्बिके ॥ १७३ ॥
वृत्तान्तास्तमुखं दयैकरससंवृत्तान्तरङ्गं त्रयी-
सिद्धान्तं स्फुटमात्मसंविदपृथक्सिद्धां तनूमाश्रितं

१. यावद्विश्वेति भवेत्.

अध्वान्तप्रणयानुबन्धिनि महत्यध्वान्तधाम्नि स्थितं
शुद्धान्तःकरणाश्रितं पशुपतेः शुद्धान्तमन्तर्भजे ॥ १७४ ॥

अपि च। श्रीमन्त्रराजमणिपञ्जरकेलिशारि
च्छन्दःशिखासदनमङ्गलदीपरेखे।
नानागमोपवननाट्यकलामयूरि
देवि त्रिलोकजननि त्रिपुरे नमस्ते ॥ १७५ ॥

·····त्रैयीपुरहरार्धभिदादिरूपे
श्रीकामराजमनुशेखरवर्णमार्गैः।
श्रूसाननस्तनजगत्प्रकृतिप्रतीके
कल्याणि हैमवति कामकले नमस्ते ॥ १७६ ॥

आपाटलं कुटिलकुन्तलमायताक्षं
शोणाधरच्छवि सुधाकरबिम्बवक्त्रम्।
कुम्भस्तनं सृणिगुणाशुगचापहस्तं
रूपं विधाय कृतलोकहिते नमस्ते ॥ १७७ ॥

मध्येपयोम्बुधि मरुद्रुमनीपधाम्नो
रत्नान्तरीपतिलकस्य ललामभूतम्।
ह्रूसं वदान्यमणिभिर्गृहसार्वभौम-
मास्थाय शश्वदनुभूतरते नमस्ते ॥ १७८ ॥

दीप्ताणिमादितनुदि············रु-
व्याप्तान्तरालभुवि विभ्रमशालिकायाम्।
मञ्चाग्रणीभवदजादिसदाशिवान्त-
पञ्चामरीधृतशिवाङ्कगते नमस्ते ॥ १७९ ॥

प्राचीनसूक्तिरसदिग्दिवसाधिनाथ
·········लोचनदलेषु सरोरुहेषु।
तत्तत्फलाहिततरङ्गितमानसाभि-
राराधिते मतिमदावलिभिर्नमस्ते ॥ १८० ॥

---

१. वेदत्रयीति प्रतिभाति

आनन्दबाष्पमकरन्दभृताक्षिपद्मै-
रंशेषु ...............रपुनर्भवाय ।
अन्तर्महाकमलकाननमम्ब-धन्यैः
संभाव्यमानचरणाम्बुरुहे नमस्ते ॥ १८१ ॥

निद्राविधौ निरवधिक्षुधया धरादि
पर्वावलीविलसितामतिलङ्घ्य पद्याम् ।
ली...............रभिषिक्तलोके
शर्वाणि कुण्डलिनि चन्द्रकले नमस्ते ॥ १८२ ॥

गीर्देवताहरिवधूगिरिजादिशक्ति-
साम्राज्यपीठनियतस्थितिजागरूके ।
शुद्धान्तसुन्दरि परस्य सुधांशुमौले
ज्ञान.........जनयित्रि शिवे नमस्ते ॥ १८३ ॥

ततश्च विपश्चिदेष निर्गत्य दुर्गत्यरुणकरघोरणीसंत्रासगरिमानुबन्धिभिरन्तर्मुखजनैरनवरताक्रान्तगह्वरगृहान्तमहरवसान..... ..... नटन्महानटपादतलाभिघातपरिपीडितशरीरतया भूरितरगैरिकपुञ्जपिञ्जरीभवदमितनिर्झरीकैतवेन परितो दरीमुखशतैः क्षतजलहरीरिव समु.........न्तं जलधरपरंपरापिहितशिखरनितम्बभागतया शाम्बरीसंछन्नमौलिचरणस्य पार्वतीपरिणेतुरनुकुर्वाणं निखिलसंसिद्धिनिर्वाहनैपुणी(ण्य)चर्वितसकलकुलशैलगर्वततिमभजत श्रीपर्वतम् ।

सरिद्वराः सप्त विधाय मध्ये विभेदनं यस्य विनिःसरन्त्यः ।
विपाटयामो वृजिनप्रपञ्चमेवं जनानामिति दर्शयन्ति ॥ १८४ ॥

पाटलाञ्चितपदं शरीरिणां घोरतापहरदानकोविदम् ।
मल्लिकार्जुनमसोढमन्मथं तत्र तं शुचिमसावसेवत ॥ १८५ ॥

यस्य सायगुरन्तुत्तरहसा पूर्णनं गुरुतरं समेयुषाम् ।
वासना..तिकरादहर्निशं ज्योतिषां सुरपथे परिभ्रमः ॥ १८६ ॥

तदनु धरणीसुराधिपो भवनाशिनि तटमकटितरसन्निधानं(?) निधानमिव निखिलनियोगिनां व्यक्तिभिदालेशवञ्चितेऽपि वपुषि व्यञ्जित....रुपसृगजा-

तियुगसमवायमनपायशौर्यवडवानलहेतिशोषितदनुजाधिराजभुजमहोजलनिधिमलोकयदहोबलपतिम्।

सर्वान्तर्यामिभावे मम निगमशिरःसंप्रदायैकलक्ष्ये
दृष्टान्तस्तम्भगर्भो न परमिदमपीत्येव संदर्शनाय।
हृन्मध्यं दानवेन्दोः सपदि विदलयन्पाणिजैः कूणिताग्रैः
प्रह्लादाह्लादकारी समहृत जगति स्फीतमत्याहितं यः॥ १८७॥

तदनु पाशायुधप्रसाधितमाशावकाशमवगाहमानः प्रकटितसेवमानजनदुरितभङ्गमुद्रामधिगम्य तुङ्गभद्रां सुमतिरित्ययमवोचत।

मातर्भवत्येव महावराहवक्त्रावतीर्णा न वसुंधरापि।
त्वमेव कामं न हि तुङ्गभद्रा किंतु त्वया सापि कृतानुषङ्गा॥ १८८॥

महा नितम्बमिव गौरवमाननीय-
सह्याचलं समधिरुह्य सुधीरयासीत्।
वेलागतं तदनु वीचिमतः प्रतीचो
लीलानिकेतमृषभध्वजवल्लभायाः॥ १८९॥

लम्बालकान्तललितामलिके पटीर-
जम्बालिकान्तधवलच्छविमङ्कयेषु।
बिम्बारुणामधरभासि विनम्य धीमा-
नम्बामथैष वचनैरधिनोन्मनोज्ञैः॥ १९०॥

हस्तैश्चतुर्भिरभयं वरमब्जचक्रे
संबिभ्रती त्रिनयना नवचम्पकाङ्गी।
पीताम्बराञ्चितकटी नवचन्द्रखण्डा
काचित्सरोजनिलया करुणाविरास्ते॥ १९१॥

चण्डि प्रसाधयसि यत्प्रियवामभागं
सौभाग्यचिह्नमिदमेव न किं भवत्याः।
अध्यास्य किं मुहुरमुष्य किरीटसीमां
सद्योऽथवा भवति नातिशयः सपत्न्याः॥ १९२॥

दिक्कूलचुम्बिनि इदं विमलस्वभावे
मातर्भवन्मणिकिरीटमरीचिपूरे ।
अर्धेन्दुनावमधिरुह्य मदीयभावः
स्वच्छन्दसंचरणकेलिविधिं विधत्ताम् ॥ १९३ ॥
कल्याणि ते मुखविधुस्मितकौमुदी च
नेत्रारविन्दकरुणामधुनिर्झरी च ।
वक्षोजकुम्भगलितामृतवाहिनी च
तन्वन्तु नस्त्रिविधतापकलापशान्तिम् ॥ १९४ ॥
चक्रं नितम्बफलकेन तवाप्तगर्वं
शङ्खं च कण्ठविजितं बिभृषे कराभ्याम् ।
आर्या गुरोरिह लघोरथवा निकाम-
मङ्गीकृतस्य परिपालनमाद्रियन्ते ॥ १९५ ॥
प्राप्यं जनेन परमं परमेतदेव
पादाम्बुजं परमितो न च किंचनेति ।
व्याकुर्वतोस्तव वराभयमुद्रिकाभ्यां
सेयं सुखाय करयोः शिरसा नमस्या ॥ १९६ ॥
अस्तोपमर्दलवमादियुगावतारे
धृत्वोदरस्य तव सूतवतस्त्रिलोकीम् ।
मातः कथं कथमिवेह महानुभावाः
सद्भाव एव सततं प्रथयन्ति चिन्ताम् ॥ १९७ ॥
सन्मार्गरोधरसिके शमवत्प्रणीत-
न्यक्कारभाजि नवमन्मथपत्रिमित्रे ।
अज्ञानुपङ्कमलिने हृदि मामकीने
शर्वाणि विन्ध्य इव ते चरणौ निधेहि ॥ १९८ ॥
मूकाम्बिके मुहुरयाम्नजपस्य कामं
रागस्पृशो रचितपल्लवसौहृदस्य ।

भक्तस्य मे पदयुगस्य भवेत्त्वदैव
श्लाघ्या गतिः सकलहंसकुलैर्दुरापा ॥ १९९ ॥

साकारा सुखकन्दली पशुपतेरेका मनोहारिणी
स्तोकालोकसुधाकृतस्मरवधूशोकाग्निनिर्वापणा।
त्रैकाल्यप्रतिपत्तिदोहनविधौ या कामधेनुः सतां
सा कारुण्यतरङ्गिणी मनसि मे मूकाम्बिका दृश्यते ॥ २०० ॥

इति सपदि हिमाचलेन्द्रकन्यां पशुपतिनेत्रचकोरपौर्णमासीम्।
समजनि भजतोऽस्य साधुमौलेरकृतकभक्तिसुधाम्बुधेः समृद्धिः ॥ २०१ ॥

इति समरपुंगवस्य कृतौ चम्पूकाव्ये षष्ठ आश्वासः।

---

अथ सप्तम आश्वासः।

अथ मनीषिमणिरेष कुमुदिनीरमणकोरकापीडसेवादरादिव शैवलिनीपतिना प्रतिमुहुरधिष्ठिताभ्यर्णे गोकर्णमधिगम्य मन्मथपरिपन्थिमन्त्रैकसाधकानघवैदिकजनानात्मीयनयनयोः पन्थानमुपनीय चिन्तामिमामतानीत्।

इह केचन शास्त्रवेदिनो भवदुःखमपरम्पराहृशः।
तदपायकृते जपक्रियामधिगोकर्णममी वितन्वते ॥ १ ॥

परिपारावारमाविर्भवन्तं देवं मारामित्रमाराध्य धीरः।
सोऽयं भूयो भक्तिपीयूषवर्षादात्तोत्कर्षां भारतीमित्यवादीत् ॥ २ ॥

अनुतटमनिशं महाबलो न यदि भवानिह नाथ तिष्ठति।
जलधिरभिभवेदयं तदा जगदभिकूलदिगन्तराक्रमः ॥ ३ ॥

अथवा लघुरेष सिन्धुरास्तां प्रतिविघ्यण्डममी पितामहाद्याः।
स्थितिमादधते धृतप्रकम्पास्तनुभृच्छासन शासने त्वदीये ॥ ४ ॥

सृजसि स्मरजेतरासिकामिह गोकर्णमिते निकेतने।
दिशसि श्रयतां तु देहिनां कथमाभोगकरम्बितं पदम् ॥ ५ ॥

अयं खलु तदनु संख्यावदग्रणीरतिलङ्घ्य सह्यधरणीधरमतिस्निग्धदेनुचरघटासमावृतो विविधनीवृदावलिमवगाहमानः प्रबलवाहिनीकुलानि

पावनस्थलानि च पदे पदे निशामयन्कुशाञ्चलपरिहसनमतिरतिमात्रपेशलां सूक्तिमभिधातुमाद्रियत ।

वरदापदाब्जमकरन्दकन्दलीं वरदापगामधिविगाह्य निर्मलाम् ।
अधुना निजामवयवार्थदुर्विधामभिधां समञ्चति मलप्रहारिणी ॥ ६ ॥

वीचीहस्ता विपुलपुलिनश्रोणिरिन्दीवराक्षी
फेनोदारस्मितविलसिता बन्धुरावर्तनाभिः ।
चक्रोरोजा सरसिजमुखी चारुहंसप्रचारा
पारावारप्रथमगृहिणी भासते कृष्णवेणी ॥ ७ ॥

महाबलेशमकुटीतटजाते तरङ्गिणि ।
सकृष्णापि त्वया शश्वदकृष्णा हन्त मेदिनी ॥ ८ ॥

दोलायितं बालसमीरणेन वीचीदुकूलांशुकमुद्वहन्तीम् ।
पृथ्व्या स्वयं भीमरथीभवन्त्या पताकिकां भीमरथीमुपासे ॥ ९ ॥

पुरुषत्रयमौलिभागभूषामणिनीराजितमञ्जुपादपीठाम् ।
तुलजापुरवासिनीं तुरीयामवलम्बे जगदम्बिकां भवानीम् ॥ १० ॥

फञ्जराजिगलितैरनारतं पिञ्जराम्भसि नवीनकेसरैः ।
पञ्जरासरिति कुत्सगाहनः किं जरायुवसतिं प्रपद्यते ॥ ११ ॥

नीलग्रीवजटा''''विगलितां निर्माल्यमालामिव
ब्रह्मक्षोणिभृदुत्तमाङ्कवितता पृथ्वीपरिष्कारिणीम् ।
आत्मीयैरधिवासितं विदधतीमम्भोनिधानं रसै-
स्तामद्याहमगण्यपुण्यसुलभां द्रक्ष्यामि गोदावरीम् ॥ १२ ॥

पात्रगा पटुधियामिव संपत्कान्तसिन्धुरमिता करिणीव ।
गौरिवाञ्चितपयोधरभारा गौतमी हरति लोचनजाड्यम् ॥ १३ ॥

तापसाघदलनाय निर्गता गौतमी हरति कल्मषं नृणाम् ।
चातकार्तिशमनोद्यता जलैरप्यद्भिरभिषिञ्चति क्ष्माम् ॥ १४ ॥

त्रिनयनजटाराजद्राजक्ष्मारुहकोरक-
व्यतिकरघनामोदा गोदावरीलहरीभराः ।

मशुवधमहाकालीनालीढगोतमपातक-
प्रशमकुशलारम्भाः संभावयन्ति वसुंधराम्॥ १५॥

जगत्पतेरस्य जटाच्युतेति विधेहि गोदावरि मा विषादम्।
सरोषगौरीचरणाहतीनामलम्भनादामुहि मोदमेव॥ १६॥

स्ववेलान्तर्लीलासुभगतरबालानिलवल-
त्तरङ्गालीतुङ्गातरलतरभृङ्गा तत इतः।
तटिन्यास्ते धन्या तरुणकमलिन्याकरतया
मणीता वेनीताचलिभिरभिवीता शतधृतेः॥ १७॥

पवित्रामद्राक्षं बहलकमलामोदमधुरैः
समीरैरध्वन्यश्रममपनयन्तीं नवनवैः।
अतिप्रेम्णा भर्तुश्चरमजलधेरर्पितमुखीं
पयोष्णीमुष्णीपप्रतिमलहरीं विन्ध्यनृपतेः॥ १८॥

कलितापीडा कमलैर्महिता पीयूषमधुरतापीना।
जनतापीतजलेयं मम तापं हरतु मलिनतापीडाम्॥ १९॥

सुधांशुकन्या सदतां जनानां तापं च दूरे तनुतां पयोष्णी।
कथं त्वमप्यम्ब कठोरधामस्तनूभवे तापि तथाविधासि॥ २०॥

अक्ष्णोर्वपत्यमृतलहरीमाश्रमैस्तापसानां
नित्योदश्वन्निगमपठनैरुल्लसत्तीरभागा।
अश्मव्रातैरचलधनुषो लिङ्गमूर्तैरमूतां
मज्जत्स्नानामनुजपटलीशर्मदा नर्मदा मे॥ २१॥

पूजनीयविभवासु भूतले जाग्रतीषु शतशो नदीष्वपि।
किं त्वयैव वितनोति केलिकामर्णवस्त्वमसि येन नर्मदा॥ २२॥

कुचपरिणतिभाजः क्षोणिबिम्बाधराया
विगलितमिव यस्मादुत्तरासङ्गचेलम्।
नटयति मुदमम्भो नार्मदं शृङ्गसीमा-
मधिवसति महाद्रेरस्य माहिष्मतीयम्॥ २३॥

पुरी जयत्यर्जुनभूपतेरियं वहन्निमां विन्ध्यवसुंधराधरः ।
त्रिविष्टपालम्बतया धृतस्मयं नगाधिराजं न तृणाय मन्यते ॥२४॥
माहिष्मतीमण्डनमार्तिहारि जनस्य दोस्तम्भसहस्ररम्यम् ।
सप्तार्णवीमुद्रितराज्यलक्ष्मीविलासगेहं किमपि स्मरामि ॥ २५ ॥
अवतारविशेषमब्जनाभेररुणोष्णीषमनल्पहेमभूषम् ।
कृतवीर्यतनूजवेषमीडे जगतीपालनकर्मनिर्निमेषम् ॥ २६ ॥

यदीयभुजमण्डले धरणिरेत्य लीलारतिं
विशङ्कटतरे""विसृजति स्म दौस्थ्यन्यथाम् ।
परीक्षणकपोपलः स दशकण्ठबाहूष्मणां
जगन्महितशासनो जयति कार्तवीर्यार्जुनः ॥ २७ ॥

रेवा यस्य परं दुरासदभुजासेतौ न माति स्म सा
तेजोवार्धिरपि क्षपाचरपतेस्त्रैलोक्यकूलंकषः ।
सप्तद्वीपनिखातयूपपुलकच्छन्नावनीविग्रहः
सोऽयं हैहयनायको विजयते शूरक्षितीशाग्रणीः ॥ २८ ॥

काचिन्महाकालनिकेतनस्य पुरामरातेर्भुवि राजधानी ।
श्रिया विशालां जनतामयन्ती चकास्त्यसावुज्जयिनी पुरीणाम् ॥ २९ ॥
भूतिं देहि ब्रूहि नामानि शंभोरायं विघ्नं लीलयेत्याचरन्ती ।
देव्या साकं ध्यायत ध्यायतेति ध्यायन्त्यस्यां दैवतं केऽपि धन्याः ॥३०॥
अस्यां मरालीततिरद्रिकन्याकेलीगतिमार्थनसापराधा ।
निवारितान्तर्गमनेव नित्यमास्ते बहिः खेयरतिच्छलेन ॥ ३१ ॥
क्रीडाजुषामत्र कृशोदरीणामारज्यमाना घुसृणाङ्गरागैः ।
सुप्रा जगत्पातकसंहतीनामुत्पातसन्ध्येव पुरः समिन्धे ॥ ३२ ॥
अस्यां निरस्ता दिवसान्तनृत्यत्पिनाकिपूजापटहप्रणादैः ।
निर्याति नृणामिव दुष्कृतालिः सौधेषु कालागरुधूमरेखा ॥ ३३ ॥
आरूढकर्मन्दिपथा इवास्यामाविर्भवज्झङ्कृतितारनादाः ।
आरामवीथीष्वनुवल्लिगेहमटन्ति भृङ्गा मकरन्दभिक्षाम् ॥ ३४ ॥

स्वयं विशालाप्यवकाशहीना दुष्कर्मलेशस्य शरीरभाजाम्।
उच्चैर्महाकालमुपाश्रितापि कदापि नैपाश्चति काललक्ष्याम् ॥ ३५ ॥
स्थितं संनिधानेऽपि धीसूक्तिदूरं निराकारमप्यर्धनारीशरीरम्।
अधिष्ठानमप्यस्य विश्वस्य शश्वन्महाकालवास्तव्यमव्यान्महो नः॥ ३६॥
अस्याः सिन्धोरूर्मिहस्तावलम्बादेनःसिन्धोरेत्य पारं भवामि।
निर्विन्ध्याया निर्मलाम्भःप्रवाहे निर्मज्याहं निर्गतः क्लेशविन्ध्यात् ॥३७॥
चर्मण्वत्याः साधु खण्डीकृतांहोमर्मण्यस्या मज्जतां वारिपूरे।
कुम्भीपाकाद्धोरपीडाविपाकात्किं भीतिः स्यात्किंचिदप्यङ्गभाजाम् ॥३८॥
इदं तावदिह दृश्यते मन्दाकिनीविहितमहितसांगत्यमलघुसलिलपूरसात्यवितीर्णजलधिसौहित्यमशिशिरकरापत्यम्।

क्षितिरोमलता कलिन्दभूभृत्करिकालायसशृङ्खला स्रवन्ती।
भवतापपरीतमानसानां नवतापिञ्छवनीयमाविरास्ते ॥ ३९ ॥
द्युमणौक्तिकसंहतेर्विधात्रा वणिजा भूविपणौ विसारितायाः।
परभागकरी पटीव नीला प्रतिभाति द्युमणेरियं कुमारी ॥ ४० ॥
मिहिरांशुविलीनमेयमार्गद्रवनिष्यन्दततौ परं किलास्याम्।
यमुनेति कलिन्दजेति सिन्धोरबलेति प्रथते नृणां विमोहः ॥ ४१ ॥
नतिरस्तु गभस्तिमालिसूनोर्नरकद्वारमहायसार्गलायै।
जनसद्गतिनर्तकीमसारप्रतिसीराकृतये प्रकाममस्यै ॥ ४२ ॥
असितोत्पलमालिकामवन्या जनतापुण्यशिखावलाभ्रपङ्क्तिम्।
शिशिरामवगाह्य सिन्धुमेनां जनितापं विजहाति जीवलोकः ॥ ४३ ॥
अनुवारमवाप्तवारिकेलेरसिताया सुरशासनस्य मूर्तेः।
अयमाविशदंशुमालिकन्यामभिरामः किमु नीलिमातिरेकः ॥ ४४ ॥
अतिवेलरसोदयानुभावात्कलयन्ती निजकामुकाभिसारम्।
असितावरणांशुकं किमेषा सहजश्यामलकच्छलेन धत्ते ॥ ४५ ॥
अभिषिञ्च कलिन्दकन्यके मामतिनीलच्छविनैव वारिणा ते।
सहसा भवितास्मि तावताहं शरदिन्दीवरबान्धवावदातः ॥ ४६ ॥

दिशि वासमवाप्य दक्षिणस्यां सहजन्मा तव शास्ति पापशीलान् ।
भवती तु परिष्कृतोत्तराशा कृपया कल्मषमेव देहभाजाम् ॥ ४७ ॥
जननि त्वदवेक्षणं जनानां निरयश्रेण्यनवेक्षणे निदानम् ।
भवदम्भसि मज्जनं तु भद्रे पुनरुन्मज्जनकारणं भवाब्धेः ॥ ४८ ॥
जननामयभेषजैः श्रुतीनां पटवासैस्तटरेणुभिर्भवत्याः ।
चरणाम्बुजवासितैर्मुरारेरनुलिप्तोऽपि भवामि नीरजस्कः ॥ ४९ ॥
रविनन्दिनि नीलरत्नयोस्ते तटसीमाजनुषोस्तयोः किलैकम् ।
अभयत्परिकर्म विन्ध्यभूमेरपरं गोपवधूपयोधराणाम् ॥ ५० ॥
हसितौषधमोहिताशयानामनुतीरं तव वल्लवाङ्गनानाम् ।
बहुशो हरति स्म नीविबन्धानतिसंधापटुरादिमः स चोरः ॥ ५१ ॥
तटमम्ब तवैनदेव शार्ङ्गी निजवंशीनिनदामृतैरसिञ्चत् ।
अत एव पुरीयमत्र भान्ती मधुरेति व्यपदिश्यते जगत्याम् ॥ ५२ ॥
महतीषु पुरीषु कामगेषा मधुरेत्यत्र किमाविरास शार्ङ्गी ।
अवतारमहोत्सवेन शौरेरथ चेयं मधुरा किमासु जज्ञे ॥ ५३ ॥
जनिकापथचङ्क्रमालसानामलघुश्रान्तिकलापभञ्जभाजाम् ।
अमृतार्पणलीलया हरन्ती नगरीयं मधुरा भवेन्न केषाम् ॥ ५४ ॥
धरणीतिलकं तरी भवाब्धेः खनिरिन्द्रानुजगारुडोपलस्य ।
दिशति प्रमदं दृशोरियं मे रजनीशान्वयराजराजधानी ॥ ५५ ॥
यदुवंशयशोनिदानभूमिः शिशुताविभ्रमसाक्षिणी मुरारेः ।
नवसुक्तिवधूविचक्षुलोकप्रतिबोधाङ्कुरपालिकेयमास्ते ॥ ५६ ॥
अवकर्णयितुं यशो मुरारेरसकृत्पौरजनोपगीयमानम् ।
गलितावरणैरियं गवाक्षैः परिफुल्लश्रुतिसंपुटेव भाति ॥ ५७ ॥
यमुनालहरीसमीरधूतैरियमाभाति शतैरट्टाकिकानाम् ।
उपकण्ठमुपेयुषां जनानामघसंघातमिवापसारयन्ती ॥ ५८ ॥
निजभक्तिनिरूढमानसानां घनसंसारविषादखण्डनाय ।
अरविन्दविलोचनः किलास्यां परिजग्राह भवानुबन्धलीलाम् ॥ ५९ ॥

चिरकालधृतं हृदा जगत्याः किमपि प्रौढविषादकारि शल्यम् ।
भगवानिह कंसनामधेयं बलसंदंशिकया समुज्जहार ॥ ६० ॥
इह धन्यतमैरलोकि रेखासरसीजातरथाङ्गशङ्खचिह्ना ।
अनुवीथि पदावली मुरारेरकुतोजन्मसरस्वतीविधेया ॥ ६१ ॥
मनुजो नहि मादृशो जगत्यामनुकम्पालवदुर्विधान्तरङ्गः ।
चिरशीलितमप्यधर्मजातं बहिरुत्सृज्य पुरीमिमां विशामि ॥ ६२ ॥

इत्यादिवचनरीतिमुखरितानने हरितालनिभवसनभरितालकटितटं हरिनीलमणिभङ्गसंकाशरोचिषमवनतपरिषदतिहर्षविरचनाय समुद्यन्तमिव कमपि तडित्वन्तमानकदुन्दुभेरात्मजमभिवन्द्य संक्रन्दनमुकुन्दशातोदरीद्वन्द्वसंवादरूपमरविन्दलोचनस्तुतिकलापमभिरूपशेखरोऽयमेवमकरोत् ॥

विधाय केलिं वियदापगायां यान्त्योस्तटीमिन्द्रमुकुन्दपत्न्योः ।
पटीविपर्यासवशेन जज्ञे प्रगल्भवादप्रतिवादभङ्गी ॥ ६३ ॥
पटे सुरेन्द्रप्रमदैकधार्ये कुतोऽन्यथा मुह्यसि गोपभीरो ।
तथैव मोहो दयितं मुरारेरशेषवन्द्यादधिकं वदन्त्याः ॥ ६४ ॥
मृगाक्षि शौरेर्महिमातिरेकमाख्याति राज्यानधिकार एव ।
बलेस्त्रिलोकीमपहृत्य बाले गोत्रारये दत्तवतः क्व राज्यम् ॥ ६५ ॥
ज्यायोबलात्साधयतोऽनुजस्य कार्याणि मुग्धे वद कः प्रकर्षः ।
त्राणं गवां तन्वति मत्सहाये दृष्टं बलं दुर्ललिते मघोनः ॥ ६६ ॥
गोपालबाले कुलिशायुधेन क्ष्मा व्यथायीति किमेष दोषः ।
ममानुकम्पा क्व नु मातृगर्भे दम्भोलिना दारयतो बलारेः॥ ६७ ॥
दिवौकसां दानवजातिमात्रे स्पर्धा निसर्गप्रभवा हि सत्ये ।
पौलोमि तर्हि त्वयि पाकशासी वैरानुबन्धात्र कुतो विधत्ते ॥६८॥
नारीवधं नर्मसखस्तवैव शतक्रतुः संविदधीत किं वा ।
अकार्यमप्याचरणीयमेव वितन्वता विश्वकुटुम्बरक्षाम् ॥ ६९ ॥
स्वकुक्षिपूर्त्यै कृतचोरवृत्तेर्दूरे जगत्त्राणधुरंधरत्वम् ।
पुंसः स्वकीयोदरपोषणं च तस्य त्रिलोकीपरिपोषहेतुः ॥ ७० ॥

मर्त्याङ्गनागर्भपुटीमितेऽस्मिन्करोषि मिथ्यागरिमाधिरोपम् ।
विश्वत्रयव्यापितनोरनेन का हानिरुन्मीलति कैटभारेः ॥ ७१ ॥

किं किं शुभे केशवशाम्बरीभिर्विमोहिता त्वं न समर्थयेथाः ।
भजन्तमुत्सृज्य जनं परेषु धात्रीं निबध्नाति तदीयमाया ॥ ७२ ॥

आनन्दामृतसर्वस्वमाशास्यममरैरपि ।
आभीरपतिगेहान्तमभिव्यक्तमुपास्महे ॥ ७३ ॥

पयःपयोधौ बहुकाललीलया वितायमानादिव वासनाबलात् ।
हरिर्विहायानकदुन्दुभेर्गृहान्व्रजे सुधाब्धे विहरन्स पातु नः ॥ ७४ ॥

जङ्घोपरि न्यस्य कृते जवेन संक्षालने संविहितां जनन्या ।
प्रदक्षिणाम्भःपरिषेकरक्षामन्तर्हसन्वीक्ष्य हरिः पुनातु ॥ ७५ ॥

स्तनं जनन्या भयतेव संमुखं प्रसारितः पातु करो बलिद्विषः ।
निशाचरीमम्ब निरीक्ष्य मारितां मयाहि मा भीतिमितीव शंसितुम् ॥७६॥

वन्दे मुकुन्दं पदपल्लवाभ्यां वाचालमञ्जीरमनोहराभ्याम् ।
प्रहारलीलां गगसि प्रणेतुमभ्यस्तडो(दो)लाफलकाभिघातम् ॥७७॥

जानुद्वयीचङ्क्रमणेषु धात्र्यां पाणिं निधायैकमुदस्तबाहुः ।
तमाहरिष्ये तरुमिन्द्रलोकादिहेति शंसन्निव शौरिरव्यात् ॥ ७८ ॥

अपि त्रिलोकीममिमीत यस्त्रिधा समाहितैरङ्घ्रिसरोजविक्रमैः ।
स माधवो नः परिपातु संचरन्करौ समालम्ब्य पितुर्गृहाङ्गणे ॥ ७९ ॥

अमेयमप्यकृतकभारतीशतैरगोचरं यमिवरचेतसामपि ।
गृहाङ्गणे किमपि यशोदया गुणैरुलूखले कलितमुपास्महे महः ॥८०॥

आकुञ्च्य पादाम्बुजमेकमन्यदुत्क्षिप्य नृत्यन्तमुदग्रचूडम् ।
पाणिद्वयीपायसगव्यसारौ पश्यन्तमीडे पशुपालडिम्भम् ॥ ८१ ॥

कराम्बुजालम्बितकिङ्किणीरवं पदे पदे कल्पितपार्श्ववीक्षणम् ।
शनैःशनैराकलिताङ्घ्रिचङ्क्रमं विनौमि शौरेर्नवजगव्यमोषणम् ॥ ८२ ॥

विशातुमामोदवशेन मोषं गव्यस्य गोपाङ्गनया कयापि ।
निजाननेन्दोर्निकटोपनीतं जिघ्रन्मुकुन्दो वदनं स जीयात् ॥ ८३ ॥

गृहे मदीये कियदद्य गव्यमहारि शंसेति कयापि पृष्टे ।
पयोधरौ पाणियुगेन तस्याः स्पृष्ट्वेयदस्तीति भणन्विटोऽव्यात् ॥८४॥
कलशीनिहितं पयः कथं वा परिपीतं भवतेति राधयोक्ते ।
अधरामृतधारणामुष्या विदधानं विमुमेवमित्युपासे ॥ ८५ ॥

हैयङ्गवीनहरणाकुलघोषयोषि-
दाक्रोशनादितरुपः पुरतो जनन्याः ।
व्यत्यस्तपाणिविधृतश्रवणानि चित्ते
नाथस्य केलिनमनोन्नमनानि भान्ति ॥ ८६ ॥

लताङ्गि मह्यं रचयाञ्जलिं पटीमहं दिशामीत्यवकर्ण्य भाषितम् ।
कृतेऽञ्जलावेककरेण राधया शिरो विधून्वन्शिशुरस्तु संपदे ॥८७॥
रक्षाकरं मङ्गलमारचय्य संमेपितः सानुनयं जनन्या ।
कस्तूरिकाक्लृप्ततमालपत्रो नासाञ्चलेनापि मणिं दधानः ॥ ८८ ॥
काञ्चीगुणोदारकटिप्रदेशो मायूरबर्होज्ज्वलमौलिबन्धः ।
वहन्करे वेत्रविषाणवंशान्पाथेयशिक्याकलितांसभागः ॥ ८९ ॥
पवित्रयन्नङ्घ्रिपयोरुहाभ्यामाभीरपल्लीभवनाङ्गणानि ।
बहिर्नयन्प्रीतनिबद्धशावं कुलं गवां गोष्ठगृहान्तरेभ्यः ॥ ९० ॥
भ्रूलीलया कांचिदपाङ्गितेन परां दरस्मेरमुखश्रियान्याम् ।
कर्तुं रहः केलिकलां वनान्ते समाह्वयन्घोषसरोरुहाक्षीम् ॥ ९१ ॥
पित्रा कियद्दूरमिवानुगम्य वात्सल्यनिघ्नेन विसृज्यमानः ।
वनाय शृङ्गिण्यवनाय याचो विद्योततां चेतसि पूरुषो मे ॥ ९२ ॥
किरीटसंदानितकेकिपिञ्छं वशीकृताभीरवधूप्रपञ्चम् ।
कदम्बगुच्छाहितकर्णपूरं कुर्वे हृदन्तः कुहनाकिशोरम् ॥ ९३ ॥
हेलावलद्ग्रीवमितत्रिभङ्गीवक्राम्बुजव्यापृतवंशनालम् ।
व्यत्यासविन्यस्तपदं पुरस्तादास्तामवस्थानमनङ्गशौरेः ॥ ९४ ॥
वंशीमुपासे वसुदेवसूनोराराध्यमानामधरांशुपूरैः ।
शृङ्गारगीतामृतसेचनेन रोहत्प्रवालामिव लोभनीयाम् ॥ ९५ ॥

वंशीसुधां वर्णय वाणि शौरेरास्वादितामर्कसुतामरालैः ।
गलन्मृणालीकवलच्छलेन तृप्तेस्तदुद्गारमिवादधानैः ॥ ९६ ॥

आप्लावयेयुरपि नः श्रवसी कदाचि-
त्कंसाभियातिकलहंसवरामृतानि ।
प्रादुर्भवत्किसलयच्छलतः प्रसार्य
जिह्वां महीरुहकुलैरपि सेवितानि ॥ ९७ ॥

अनुभवेयमहं किमु जातुचिन्मुरभिदो मुरलीनिनदामृतम् ।
किसलयाञ्जलिशालिमुखाञ्चलैः किमपि सेवितमन्यभृतैर्द्विजैः ॥९८॥

आपाटलान्यङ्गुलिपल्लवानि व्यापारयन्तं विवरेषु वेणोः ।
नादामृतैर्नन्दगवीकुलानां मोदान्सृजन्तं कलये मुकुन्दम् ॥ ९९ ॥

खुराहतिक्षुण्णभुवां पशूनां परागजालैः परिधूसराङ्गे ।
सुखाद्दिगन्ते मुरलीनिनादैः क्रियास्यनन्ते मम शेमुषीयम् ॥ १०० ॥

दृढानि गोपीधृतिबन्धनानि हठादपाकुर्वति हासलेशैः ।
अनीदृशे मे मतिरागमान्तवनीचरे वैणविकावतंसे ॥ १०१ ॥

बिम्बाधरं बन्धुरमन्दहासं लम्बालकासङ्गिललाटदेशम् ।
विरामकालेऽपि न विस्मरामि मुखं रणद्वेणुरसं मुरारेः ॥ १०२ ॥

हसितरश्मिशि हारिकण्ठनाले परमानन्दसरःप्ररूढमूले ।
अधरच्छविकेसराभिरामे श्रुतिसौरभ्यनिधौ शुचां विरामे ॥ १०३ ॥

व्रजयोषिदपाङ्गभृङ्गपीते मकरन्दायितमञ्जुवेणुनादे ।
परिलक्षितशृङ्गिणीपरागे रदमुक्तारमणीयगर्भभागे ॥ १०४ ॥

अमितप्रणयावगाहिनीभ्यां रचिताघ्राणविधौ रमावनीभ्याम् ।
कुरु मानसराजहंसलीलां कुहनागोपमुखाम्बुजे विशालाम् ॥ १०५ ॥

वनाद्दिनान्ते व्रजमाव्रजन्तमभङ्गशृङ्गारवपूरिताशम् ।
श्रवःकदम्बस्तबकेन सार्कं मनागिवाम्लानमुखारविन्दम् ॥ १०६ ॥

यराङ्गनादन्तपटप्रतीति सरोपराधासमुदीक्षितेन ।
बिम्बोष्ठमध्ये मृगपाटलिम्ना विन्यस्तवंशीजनुषा विभान्तम् ॥१०७॥

वृन्दावने प्रीणितया कयापि संभावितं सप्रणयावलोकैः ।
संकेतभूवञ्चितया तु गोप्या संताडितं दारुणदृष्टिपातैः ॥ १०८ ॥
भ्रूक्षेपमन्दस्मितहस्तरङ्गैः पुष्णन्तमन्तः स्मरमङ्गनानाम् ।
आभीरवृद्धाननुकम्पयार्द्रैरालापभेदैरनुमोदयन्तम् ॥ १०९ ॥
नन्देन श्रुत्वाभिगमेन गाढमालिङ्गय दोर्भ्याममिगम्यमानम् ।
आविःस्तनक्षीरमिलिन्दभाजा यशोदया सादरमीक्ष्यमाणम् ॥११०॥
श्रीभाविगोसंचरणप्रदेशान्संकेतयन्तं सवयोजनानाम् ।
अग्रेचलद्गोकुलमम्बुजाक्षमालम्बतां बालकमाशयो मे ॥ १११ ॥
गोवर्धनव्यञ्जितकौशलेन गोवर्धनच्छत्रमुदस्य दोष्णा ।
गोपायिताभीरकुलाय वर्षाद्गोपायितायास्तु स ते प्रणामः ॥११२॥
ऋजूकुर्वन्नपि हरिस्त्रियकामसृजन्पुनः ।
दृगन्तकचभारेषु त्रिषु वक्रां धिनोति नः ॥ ११३ ॥
भवभीतिपराकृतेरुपायं शृणु चेतः श्रुतिमौलिसंप्रदायम् ।
परिशीलय भावनां मुरारेः कुरु दारादिकुतूहलानि दूरे ॥ ११४ ॥
प्रसूरियमसौ पिता मम सुतो नताङ्गीति किं
विमोहमरुगाहनव्यतिकरेण वा ताम्यसि ।
यदूद्वहवधूटिकाजठरशुक्तिमुक्तामणौ
मनो भज विनोदनं मधुविदारके दारके ॥ ११५ ॥
अशौरिकुलपावनानकृतनन्दगोपालका-
नकालियविमर्दनानकरनीतगोवर्धनान् ।
अकंसमदभञ्जनानकलितावनीरञ्जना-
नवाणभुजदारकानलमुपास्य वृन्दारकान् ॥ ११६ ॥
अलनवृषभासुरैरशिखिपिच्छकाभासुरै-
रगव्यरसलालसैरपटुरासलीलारसैः ।
अगोमरणदीक्षितैरकमलनुवादीक्षितै-
रमृङ्गसचिवालकैरलमशाम्बरीबालकैः ॥ ११७ ॥

कृष्णस्य वृन्दावनकन्दरान्तराभीरदाराभिरतेः कथाभिः ।
अलं विमुक्त्यै कृतमर्चनायामायासमौरेरमरान्तरागाम् ॥ ११८ ॥
वनमालिवशीकृताशयानां पदविन्यासपवित्रितो वधूनाम् ।
यमुनातटरेणुरेव पुंसामलमंहो विनिहन्तुमङ्गसङ्गी ॥ ११९ ॥
परःसहस्राणि परस्य धाम्नः सन्त्येव रूपाणि जगद्विभूत्यै ।
भूयो भूपा गोपविलासवीर्यलावण्यसौरभ्यलवोऽपि तेषु ॥ १२० ॥
पशुपैरपि बाह्यदृष्टिशीलैर्ददृशे दरथरथाङ्गशङ्खचिह्ना ।
अधिनन्दनिवासमागमान्तैरपि भूय्या पदपङ्क्तिरब्जनाभेः ॥ १२१ ॥
उरुभक्तिसुधारसोर्मिलानामपनेतुं जनिखेदमङ्गभाजाम् ।
स्वयमादृतसंभवालुयन्ये महनीये रमतां मनो मुकुन्दे ॥ १२२ ॥
किंच—वन्दे महः किंचन वंशनालीशृङ्गाङ्कशाजिह्मगचापहस्तम् ।
गुञ्जारुणं क्वापि ततोऽपि नीलं बर्हावलीबालमृगाङ्कचूडम् ॥ १२३ ॥
शृङ्गाटमध्ये कृतसंनिधाना मुखारविन्दे मुरलीं दधाना ।
ममास्तु चित्ते महनीयशीला विद्या मुरद्वेषिविचित्रलीला ॥ १२४ ॥
इदं मर्दशद्वयमेवमेव कृतव्यतीहारमजायतेति ।
विभावयन्ती विनिमाय पादौ विद्या परा वेणुमती समिन्धे ॥१२५॥
कुहचिज्जयकुञ्जरप्रचारं परतो भावितराजहंसयानम् ।
कटिसीमनि वाससी वसानं कनकाद्यासिकुसुम्भरागशोणम् ॥१२६॥
हृदि कौस्तुभमेकतो दधानं परतस्तुङ्गपयोधरोपरुद्धम् ।
गिरिधारणकर्कशैकपाणिं कुसुमादप्यतिकोमलान्यहस्तम् ॥ १२७ ॥
हरिणाधिपकोकिलावलेपान्क्षपयन्तं निजकण्ठनादभङ्ग्या ।
क्वचिदुज्ज्वलकुण्डलाभिरामं पटुताटङ्कपरिष्कृतं कुतोऽपि ॥ १२८॥
विनतार्तिहरं विलोचनाभ्यां कमलेन्दीवरगर्वमोचनाभ्याम् ।
धृतचित्रकद्वयसरोरुहा(भ्यां) निटिले निर्जितबालचन्द्रभासि ॥ १२९ ॥
प्रियकस्तबकासितोत्पलाभ्यां प्रतिपन्नश्रवणावतंसकृत्यम् ।
शिरसा शिखिनःशिखण्डमालां शशिखण्डं च सहैव लालयन्तम् ॥१३०॥

वलभिन्मणिबन्धजीवशोभं धृतपाशाङ्कुशपुष्पबाणचापम् ।
मुरलीवरमूर्च्छनासु शश्वद्रमनीयासु निबद्धमौलिकम्पम् ॥ १३१ ॥
गिरिशार्धगृहान्तरे विहारान्कलयन्तं नवकल्पशाखिमूले ।
परितः परिवारदेवतानां प्रकरेणाहितसेवनानुबन्धम् ॥ १३२ ॥
इतरेतरयोगमेयुषाभ्यामतिहृद्यन्मकरन्दशर्कराभ्याम् ।
कृतिनः खलु केऽपि भावयन्ते भवशान्त्यै परसंविदोरभेदम् ॥ १३३ ॥
रुचिराद्भुतरूपसंविधानं परमानन्दसुधापयोनिधानम् ।
उषितः पथि योगिनां विधेये तदहं धाम विचिन्त्य तत्र लीये ॥ १३४ ॥
पुण्यस्थानाग्रगण्यादथ यदुनगरादेष तस्मान्मनीषी
स्थाण्वीशास्य धरण्यामभजत किमपि क्षेत्रमुच्चैः पवित्रम् ।
सद्यः संसिद्धिहेतुं समधिकतपसां पुष्करं दुष्कराणां
सोमावासं प्रभासं सुगतियुवतिसंचारिकां द्वारकां च ॥ १३५ ॥
अथ द्रुताभीष्टकरीं शतद्रुं पाशापहर्त्रीं भजतो विपाशाम् ।
इरावतीणीं धरणीधरेन्द्राविरावतीं चैष निषेवते स्म ॥ १३६ ॥
साभोगां चन्द्रभागां जगदखिलमिदं पावयन्तीं च सिन्धुं
सेवित्वाथो निवृत्तः परिचितधनदारामसंन्यादिगन्तात् ।
मौढं जालन्धपीठाभिधमनघपदन्यासधन्यं भवान्या
दृष्ट्वा प्रापद्यतासौ हिमवति किमपि स्थानमानन्दशाली ॥ १३७ ॥
असौ पुनरनेकतटिनीसरोवनीनगरप्रदेशेषु विरचितभ्रमणोऽपि परमपाव-
नपयःपूरनिष्यन्दिनीं शृङ्गिणीमिव पुङ्गवकिशोरकलितशतरङ्गिणीं निशाम-
यन्किमपि चिन्तातिशयसटानिताशयो व्याहर्तुमिति गिर मावर्तत ।
इक्ष्वाकुसंतानयशःपताकां मुक्तामणिं तां मुनिकण्ठशुक्ते ।
दुर्वर्ण्यरूप्यामवनीवशायां निर्वर्णयिष्यामि कदा स्रवन्तीम् ॥ १३८ ॥
विधाम्बुजश्रेणिविमातवेलां मायातमश्चन्द्रमरीचिवीचीम् ।
मुक्तालतां मुक्तिविलासवत्यां भागीरथीं चेतसि भावयामि ॥ १३९ ॥
गङ्गामुपासे गगनापदेशप्रासारकेलीकलहंसपङ्क्तिम् ।
स्वयंवरासक्तिसमेतमुक्तिमधुस्रम्भोजमधुव्रतमालाम् ॥ १४० ॥

किरीटिकोदण्डकृतप्रहारव्रणोत्थणीभावविशङ्कयेव ।
यामोषधीशेन समं महेशो दधाति मौलौ तटिनीं नुमस्ताम् ॥ १४१ ॥
भागीरथी सावतु या गिरीशजटाटवीपर्यटनोपजातात् ।
आशाभ्रमान्मार्गमजानतीव भगीरथस्यन्दनमन्वयासीत् ॥ १४२ ॥

क्रीडापराधशमनाय नतस्य शंभो-
श्चूडापदे विहरणं समवेक्ष्य यस्याः ।
कोपातिरेकमयते कुलशैलकन्या
सा पावनी दिशतु संमदमभ्रगङ्गा ॥ १४३ ॥

अम्बरगलितमासीद्ब्रह्माण्डघटे बलिद्विषा यस्मात् ।
तस्मादतीव पूतं जज्ञे किल सौरसैन्धवं सलिलम् ॥ १४४ ॥
द्युसिन्धुरुर्व्यां दुरितानि हन्तुमाढौकते वीवधगूढरूपा ।
प्रकाशसंचारविधौ भयेन कुतोऽपि धावेयुरितीव बुद्ध्या ॥ १४५ ॥
समुद्धृता वीवधसंपुटीषु भागीरथी भाग्यवतां जनानाम् ।
आरोहणं मूर्धनि संविधातुं मायो विधत्ते पदमंसभागे ॥ १४६ ॥
गङ्गा निजं वारि विगाहमानाञ्शरीरिणः कालहरीकरोति ।
सुधांशुमौलेः स्मयदापहस्य गर्वापहाराय कृतोद्यमेव ॥ १४७ ॥
विष्टपत्रयतमःपरिपाटीखण्डनाय कलितावतरापि ।
अभ्रसिन्धुरखिलानपि लोकानन्धकारयति हन्त किमेतत् ॥ १४८ ॥
निमज्ज्य गङ्गाम्भसि निःसरञ्जनः पयोन्दनीलप्रतिमागतं गलम् ।
विलोक्य जम्बालविलेपशङ्कया करोति भूयोऽपि च गाढमज्जनम् ॥१४९॥
मातेति पूर्वं महयन्विधत्ते सुरापगायां सुकृती विगाहम् ।
कान्तेति पश्चात्कलयन्नसौ तां कोटीरकोटौ कुरुते विचित्रम् ॥ १५० ॥

स्मेराम्भोरुहशीधुसारलहरीनिष्यन्दपुर्दिग्घयो
रोधोदेशविकासिकैतकरजोविस्तारकुक्षिंभरिः ।
वीचीनर्तितराजहंसवनितासंगीतसर्वंकषो
मर्त्यानां हरति श्रमं सुकृतिनां मन्दाकिनीमारुतः ॥ १५१ ॥

कदा तरङ्गे गगनापगाया निमज्ज्य गाढं निवसामि तावत् ।
प्रविश्य यावत्प्रतिहृत्प्रतीकं समूलमुन्मूलयते स तापान् ॥ १५२ ॥

अयि नगराजनन्दिनि घनसुकृतसारकन्दलनिष्यन्दिनि परतत्त्वविज्ञानपाथोनिधानकौमुदि भगवति भागीरथि,

निम्नगासु न ते तुल्या नीचेषु न च मे समः ।
मयि प्रपातनं मातर्विधातुं किं विलम्बसे ॥ १५३ ॥

अनन्तरमन्तर्वाणिरयमतिदुरन्तभवखेदसंतानभीषितः पिपासित इव पीयूषकन्दली परिशुष्यदमेयसस्यसमूह इव प्रत्यग्रवर्षधारां प्रतिभटानुद्रुत इव प्रबलत[मा]मित्रवाहिनीं जिह्मगविषाभिभूत इव जीवातुमूलिकां कल्लोलिनीरमणलहरीविपक्त इव कामपि महातरिं तीव्रनदीपूरनीयमान इव तीरभूमिं घर्माभितप्त इव कर्पूररसनिर्झरीं निर्धनलोक इव निक्षेपसततिं जगतीधराधीशशिखरान्तरादधिहरिद्वारमापतन्तीममृताशनसरितमुपलभ्य निर्भरानन्दसंभ्रान्तमानसो मौनमहासीत् ।

पयः प्रकृतिशृङ्गिण्या ब्रह्माण्डोधसि संभृतम् ।
जगदर्भकजीवातु गङ्गेति परिगीयते ॥ १५४ ॥
मिथ्यादेशकरी सेयं विविधप्रत्ययावहा ।
आगमैरञ्चिता भाति शब्दविद्येव जाह्नवी ॥ १५५ ॥
उद्दिधीर्षुः सगरजानसौ स्वर्गादवातरत् ।
गणयन्ति न हि क्लेशं परार्थैकपरायणाः ॥ १५६ ॥
गिरिशस्य पुरा केशान्परिगृह्योर्मिपाणिना ।
पादावलम्बिनी पश्चादासीज्जाह्न्यादसौ नदी ॥ १५७ ॥
ईशमुक्ता गिरिदरीरियमाप पदे पदे ।
भगीरथस्य तन्वाना भावं भूयस्तपोविधौ ॥ १५८ ॥
परं नापूरि जाह्नव्या भगीरथमनोरथः ।
पारावारोऽपि निःसीमपरिणाहविभूषितः ॥ १५९ ॥
त्रिविक्रमपदोद्भूता त्रिलोकीमियमानशे ।
कारणस्यानुकुरुते कार्यं हि गुणसंपदा ॥ १६० ॥

अनन्तपथगाप्येषा हन्त त्रिपथगामिनी ।
भगवत्पादजातापि शुक्ला वर्णेन शोभते ॥ १६१ ॥
नदी नवसुधाधारा वसुधावासवत्यपि ।
प्रतिकूलप्रवृत्तेयमनुकूलापि देहिनाम् ॥ १६२ ॥
गङ्गोरगी गिरीशस्य जटाकन्दरनिःसृता ।
विषोदमा वितनुते पापमण्डूकपारणाम् ॥ १६३ ॥
आस्ते किमावृता गाङ्गे दाहशक्तिरिहाम्भसि ।
निर्दह्यते यतो नृणामस्य सङ्गादघाटवी ॥ १६४ ॥
आपगाया जगत्यस्याः कोऽपि शीतलतागुणः ।
पातकानि प्रकम्पन्ते यस्या नामश्रवादपि ॥ १६५ ॥
ननु त्रिपथगावारि समस्ताम्भोविलक्षणम् ।
सिक्तः कूलाङ्कुरो येन कल्पते मूलतृप्तये ॥ १६६ ॥
कोऽपि निर्जरवाहिन्या गुणासङ्गी शरोत्करः ।
चलङ्गवेन तनुते षडरिच्छेदनं नृणाम् ॥ १६७ ॥
अनादिमलसंघातहरणैकपटीयसीम् ।
अभ्रगङ्गामपि नदीमन्यामपि गृणन्त्यहो ॥ १६८ ॥
धिष्ण्यण्डपुटनिष्पन्नो वियद्गङ्गामयो रसः ।
अजरामरणां सिद्धिमाधत्ते सेवितो नृणाम् ॥ १६९ ॥
शिरांसि भजतामाशु सिन्धुरेषाधिरोहति ।
विवरीतुं प्रवृत्तेव विश्वमूर्धन्यतां निजाम् ॥ १७० ॥
अस्यामिहावतीर्णायामाविरास्ते भवाद्भयम् ।
कालमन्मथयोः शश्वत्कदाचिन्न शरीरिणाम् ॥ १७१ ॥
विमुक्तिविश्राणनधुर्यभावबोधाय बद्धा भुवनान्तराले ।
काशीपतेः क्षौमपताकिकेव लेखस्रवन्त्या लहरी समिन्धे ॥ १७२ ॥
इयं प्रसन्ना हृदये जले च तीरे प्रवाहेऽपि च दीप्रहंसा ।
अभीष्टदाने गमनेऽपि शश्वदपास्तमान्द्या तटिनी चकास्ति ॥१७३॥

आपन्नसत्त्वेव वियन्नदीयमाविर्भवत्केतकवर्हशोभा ।
वीचीकरालम्बितपार्श्वमिचिविजृम्भमाणश्वसनं प्रयाति ॥ १७४ ॥
कूलद्विजा कुन्दसगन्धमूर्तिः स्वादुस्तुपारा सुरभिः सरोजैः ।
इयं प्रसूतेः फलमिन्द्रियाणां मन्दाकिनी पुष्यति मामकानाम् १७५

तदनु भुवनोपतापदमनोपचितरंहसि सुमनोनदीजले कलितावगाहनो बुधजनोत्तंसमणिरतिमनोहरं वचनोपहारमतनोत् ।

त्रिमार्गगे वाङ्मनसातिदूरः स कोऽपि जागर्ति तव प्रकर्षः ।
यदन्यतीर्थातिशयप्रसङ्गे विश्राम्यति त्वय्युपमानभावः ॥ १७६ ॥
दानाय मुक्तेर्धृतकङ्कणायां मयि स्थितायामपि केऽपि मर्त्याः ।
क्लिश्यन्ति चेतः श्रुतिचिन्तयेति क्रुसाट्टहासेव विपाण्डरासि ॥१७७॥
ब्रह्माण्डरन्ध्रात्पतनं सुमेरौ नानानगेन्द्राभिहतीश्च गुर्वीः ।
अचिन्तयित्वा भुवमागतासि पातुं सुतानम्ब भवाब्धिमग्नान् ॥१७८॥
हिमाचलं प्राप्य जटाकलापादीशस्य नेत्रानलतापितेव ।
प्रपद्यसे मज्जदनेकलोकभवाग्निकीलाकुलितेव सिन्धुम् ॥ १७९ ॥
अम्ब त्वया भेषजमल्पपूर्वमशिक्षि कस्मादिदमभ्रसिन्धो ।
भवज्वरं यद्विषमं प्रकृत्या शीताम्बुसेकेन नृणां क्षिणोषि ॥ १८० ॥

ब्रह्मन्हरे हर भयादवतेति देही
जल्पन्निमज्जति जले तव जह्नुकन्ये ।
निर्मोहि पाहि निजहीति निदेशमेषां
तन्वन्नुदञ्चति क एष तवानुभावः ॥ १८१ ॥

गगनतटिनि तावकं गरिम्णा सलिलमशेषजलातिशायि मन्ये ।
न विसृजति निमज्जतां नराणामिदमधिरुह्य सकृद्यतः शिरांसि ॥१८२॥
मरणे निजवर्त्मनोऽपि खिन्ना भवतीं जाह्नवि देहिनो भजन्ते ।
किमिदं निदधाति मूर्ध्नि तेषामहहाशेषजगत्कुटुम्बभारम् ॥ १८३ ॥
त्रिदिवस्रवन्ति भवदम्बुमाधुरी सकलातिशायिविभवेति मन्महे ।
अवलिह्य जातुचिदिदं यतो जना विमुखीभवन्ति जननीकुचामृते १८४

अयि तावकं चरितमद्भुतोदयं सुरभीकरोति सुरलोकनिम्नगे ।
पदमुन्नतं भजनसङ्गिनो जनान्नयसे यतः स्वयमधोनिपातिनी ॥ १८५ ॥

चेलं चर्म निकेतनं पितृवनं पात्रं शिरो लेपनं
भस्मालंकृतिरस्थिजालमनुगा वेतालपारम्परी ।
भिक्षापर्यटनं च वर्तनमहो नृणां भवत्सेविनां
मातर्ब्रूहि कथं त्वदीयभजनं कुर्वे सुपर्वापगे ॥ १८६ ॥

आकण्ठं सलिले निमज्ज्य पुलिनाभोगोपधाने शिरः
कृत्वा शैलसुतापते सुररिपो गङ्गाधरेत्यालपन् ।
गृह्णन्कर्णपुटे शिवेन कृपया प्रत्याहृतं तारकं
तीरे जाह्नवि तावके तनुपरित्यागं विधास्ये कदा ॥ १८७ ॥

त्वद्रोधोभुवि भूस्त्वदम्बुनि जलं त्वत्फेनभासि प्रभा
त्वद्वीचीपवने मरुत्त्वदुदकावर्ताम्बरे चाम्बरम् ।
इत्थं देवि मदीयदेहजननी भूतावली लीयतां
त्वत्संबन्धिनि जह्नुनन्दिनि महत्येषा मम प्रार्थना ॥ १८८ ॥

इति स्तुत्वा नभःसिन्धुमेष धीमानमोदत ।
मनसा फलिताशेषमनोरथसमृद्धिना ॥ १८९ ॥

इति समरपुङ्गवकृतौ यात्राप्रबन्धचम्पूकाव्ये सप्तम आश्वासः ।

---

## अष्टम आश्वासः ।

पत्या प्रकाश्यमानं क्षेत्राणामयमुपास्य केदारम् ।
सकलमहितं फलानि स्वकुलत्राणक्षमाणि लभते स्म ॥ १ ॥

उच्चैर्महागिरिविहारमुपेत्य धीमा-
न्नीहारसंवृतिनिवृत्तिदिनावतारे ।
प्राह्ण्यदादिपुरुषं बदरीवनान्तः
पश्यन्करोदरमिपद्बदराविशेषम् ॥ २ ॥

तदनु कारुण्यलवनवक्रितकामरूपां कामरूपान्तराहितकामपीठस्थितिं कामपि परदेवतामाराध्य नरदेवदुर्नयनाटिकाविभावनपाटवानुवर्तिभिरालापविस्तारैरलोपीत् ।

त्वद्भ्रूलीलानुसारित्रिपुरहरणदृक्किङ्कराघोक्षजाज्ञा-
निर्वोढृ ब्रह्मचिन्तासमुपनतजगद्धोरणीकोणभाजः ।
उर्व्यां क्वापि प्रदेशे कतिपयविषयाधीशतामेत्य मत्ता
न त्वामश्नन्ति भूपाः समयविषमता किं ब्रवीम्यद्रिकन्ये ॥ ३ ॥

नत्वा पृच्छामि किंचिद्भगवति भवती वाच्यमेतत्कुतश्चि-
त्पुण्यात्पट्टाभिषेकव्यतिकरसमयप्राप्तिमात्रेण राज्ञाम् ।
सौजन्यं क्व प्रयायात्क्व मतिरुपरमेत्क्व व्रजेत्साधुवादः
सौलभ्यं क्वापसर्पेत्क्व पुनरपसरेदातुरेष्वार्द्रभावः ॥ ४ ॥

भूजाने जय जीव कोऽत्र पुरतः शब्दायते वार्यता-
मायुष्मन्नहमेव कोऽसि कथय त्वं वा त्वदीयाश्रितः ।
आस्तां तद्भवदीयनाम किमहः डित्थस्तथा वा तदि-
त्यभ्यस्तानपि खेदयन्ति गिरिजे भूपा भवद्भक्तिकान् ॥ ५ ॥

आयाहि भ्रातरेहि ह्यलमनवसरो याहि मे देहि सद्यः
स्वर्णान्येतत्पिधेहि प्रतिसुवमथवा ब्रूहि नो चेदपेहि ।
इत्येवं द्रष्टुकामा नरपतिहतकानेवदासन्नभृत्यै-
रायास्यन्ते नितान्तं जननि तव पदद्रोहिणो देहभाजः ॥ ६ ॥

ह्यः शर्वर्यां समज्याविघटनसमये हे बुधा युष्मदर्थं
राज्ञेऽवोचाम किंचिद्रहसि स च तदा प्रीतचेता इवास्त ।
इत्थं वागीशसार्थानयि जननि भवद्भक्तिकान्वञ्चयन्तो
मन्दाः कुर्वन्ति केचित्पितृपतिनगरीमार्गपाथेयबन्धम् ॥ ७ ॥

आकर्ण्यास्माकमभ्यागमनमवनिभृद्भित्रिकक्ष्यान्तराणि
प्रोलङ्घ्याभ्येत्य नीत्वा बहुमतिमतनोदर्धपीठीजुषा नः ।
इत्थं मिथ्यावचोभिः पटव इव जना वञ्चयन्ति प्रपञ्चं
केचिज्जानन्ति नैते भवदुपजनितानम्बिके विप्रलम्भान् ॥ ८ ॥

अद्य प्रातः समायामखिलनृपतिषु प्रेक्षमाणेषु पीठा-
दुत्थायास्मत्कराग्रादवनिभृदुपदामग्रहीत्पाणिनेति ।

एतादृक्त्वेन जात्वप्यवनिपतिम[वि]ज्ञातवन्तोऽपि केचि-
द्राजाभिज्ञा इवाज्ञास्त्वयि सति विमुखेष्वैन्द्रजालं सृजन्ति ॥९॥
नीहाराहार्यकन्ये तव पदकमलध्यानमुद्राविधानै-
रत्यर्थं वर्तयन्ते जनुषि सफलतां केऽपि धन्या धरण्याम् ।
अद्राक्षीदीपदस्मान्नृपतिरधिगतप्रीतिरद्येति सार्थं
मन्वाना जन्म यान्ति प्रतिमुहुरितरे निर्वृतिं दुर्विवेकाः ॥ १० ॥
मातर्दैतेयवैरिप्रमुखसुरवरैः शश्वदध्यासितायां
मावस्कागारबाह्याङ्गणभुवि वसतिप्राप्त्युपायं विहाय ।
हा हा मोहाद्यसन्ते जगति तनुभृतो नैकनिष्ठ्यूतवीटी-
जम्बालैर्दूषितायां नरपतिभवनद्वारि कर्तुं विहारम् ॥ ११ ॥
धिक्कारः सौविदल्लैश्चिरवितत बहिर्वेदिकावासकार्श्यं
याच्ञादैन्यानुरोधः करितुरगकुलेष्वाकुला पर्यटाख्या ।
निर्हेतुर्दण्डपातो भृशमुलमरुषा मेदिनीनायकेने-
त्येवंरूपेण मातः परिणमति नृणां त्वत्पदाब्जापराधः ॥ १२ ॥
त्वत्पादाम्भोजपूजाविरचनविमुखीभावदोषावतीर्ण-
क्षोणीभृत्सेवनानां पुरुषपरिषदामद्रिराजन्यकन्ये ।
नाहारो नैव निद्रा न सुखरसिकता नार्चना देवतानां
राजद्वारोपकण्ठेष्वपि तु तत इतः पर्यटाख्यैव कृत्यम् ॥ १३ ॥
त्रैलोक्यश्लाघनीये धरणिधरकुलोत्तंसवंशे प्रसूतिः
शुद्धान्तैश्वर्यभाक्त्वं त्रिभुवनभरणोल्लासिनश्चन्द्रमौलेः ।
लोकानां मातृता चेत्यखिलमपि शिवे ह्यधमेतद्भवत्या
भूपद्वारासिकायै पुनरपि तु सतां स्फुरितैर्व कष्टा ॥ १४ ॥
आवासं दुर्गुणानां कमपि नृहतकं भूपतित्वेन सृष्ट्वा
तद्गेहद्वारि याच्ञामदह रचयितुं यद्विनिर्मासि धीरान् ।
सोऽयं सर्गस्वभावः किमु तव जननि स्रष्टुः किं विभ्रमो वा
नैर्घृण्यं वा किमाहो किमुत दृढतरद्वेषिता वा बुधेषु ॥ १५ ॥

तस्याः को वा निषेधं सृजति गिलति चेदाद्वृतिः सस्यजालं
मर्यादालङ्घिनी चेज्जलनिधिलहरी को नु वा तां निरुन्ध्यात्।
किं च त्वं शैलकन्ये कुटिलनृपगृहद्वारवेदीविहार-
क्लेशोदन्यावदान्या भवसि यदि सतां कस्तव स्यान्नियन्ता ॥१६॥
भूभृत्सेवाविधानं बुधजनविततेः शास्त्रदृष्टेः पिधानं
दुष्कृत्येषु प्रधानं दुरितमिषविषोन्मेषपाथोनिधानम्।
ब्राह्मण्यस्यावसानं प्रसरदयशोवल्लयुपघ्नप्रदानं
सत्वस्यापोपधानं सति किमु बहुना त्वय्युपेक्षानिदानम् ॥ १७॥
भुक्ते प्राचीनवित्ते गरिमजुषि ऋणे भिक्षुतायां धृतायां
संमाने हीयमाने नृपसदसि बहिर्द्वाररोधेऽपि जाते।
कोऽयं मायानुभावस्तव सति विलसत्यर्थलाभातिलोभा-
द्भावं भावं बुधानां ततिरटति मुधा राजधान्यामधन्या ॥ १८॥
विन्यस्ताञ्जलिना प्रणम्य शिरसा याचे दया चेद्बुधा-
नास्थानीनरकान्तरे क्षितिभुजां कामाक्षि मा मा क्षिप।
मय्यस्मिन्क्षिपसि व्यपेतकरुणालेशा तदा शालिका-
द्वाराध्यासनदुर्दशां वितर नो गुर्वीं दुरुर्वीपतेः ॥ १९॥
नैतत्स्वर्गतिसाधनं न च कुलाचारं(रो) न चाज्ञा गुरो-
राम्नायैर्विहितं च कर्म यदिदं भूपाधमोपासनम्।
प्राग्जन्मन्यचलात्मजे कृतभवत्पादापराधा वयं
पातं केवलमात्मनः स्वयमहो कर्तुं प्रवर्तामहे ॥ २०॥
मूर्धा पर्यटने कृतेऽपि करुणामुद्रा न चेत्तावकी
न प्राप्येत नरैर्गुवाकफलमप्यन्तर्घुणास्वादितम्।
जानन्नप्यमुमर्थमर्थपटलीसंपादनाकाङ्क्षया
हा धिक्कष्टमनुद्रवामि धरणीपालाधमानम्बिके ॥ २१॥
त्वच्चिन्तां कलयामि चेत्त[दधुना] प्रत्यूहजाग्रन्मनः-
क्षोभोत्पादनचञ्चुरौदरशिखिज्वाला समुज्जृम्भते।

कर्णौ मध्याह्नदीन समयमनुसरत्यम्बुदः स्वर्गमात्रे
सन्तानस्त्यागशाली वयमपि तु मुहुः सर्वतो दानशौण्डाः ।
इत्युर्वीपालगर्वप्रलपितगरलज्वालजालानि पातु
कर्णाभ्यां किं नु सृष्टा वयमवनिधराधीशकन्ये भवत्या ॥ २९ ॥
कुम्भीपाकादिनानाविधनिरयकुलेष्वातल सन्निमज्जा-
व्यापारे नास्ति भारः सरसिरुहभुवो यावदायुर्विरामम् ।
क्ष्मापालद्वारि किंतु क्षणमपि वसतिं शक्यते नैव कर्तुं
तस्मादस्मद्विपक्षं जनमपि न कदाप्यम्ब तस्या निधेहि ॥ ३० ॥
आस्थानी गाहनीया नृपनिकटजुषो रञ्जनीया मनुष्या
भूपालः सेवनीयः स च बहुलधनैरापनीयो मयेति ।
चिन्तां सत्यज्य सोऽहं तव पदनलिनोपासनामात्रकृत्यं
भेक्तुद्भाव कदा वा वद जननफलान्यम्ब संपादयिष्ये ॥ ३१ ॥
यास्यामो राजधानीं कथमपि नृपतेरन्तिकं तत्र को वा
नेष्यत्यस्मानकस्मात्प्रचुरधनभरैः प्रीणनामन्तरेण ।
दृष्टे वा राज्ञि कृत्वा चिरवसतिमृते नाञ्जसा वाञ्छितासि-
स्तस्मादक्लेशलभ्या द्रुतफलजननीमद्रिजां न त्यजामः ॥ ३२ ॥
लक्ष्मीकुर्वे किमुर्वीसहचरहतकानम्बिके तावकाङ्घ्री
जाग्रत्यश्रान्तमन्तःकरणभुवि ममाभीष्टविश्राणनाय ।
त्वद्भृत्यह्वा स्थवीटीचिपिटकपटसंवाहकक्रीतदासी
दासेयप्रेष्यचेटीसुतजनसदृशाः किं नु ते राजकीटाः ॥ ३३ ॥
कामाक्षि त्वत्कटाक्षव्यतिकरकलितामोदसाम्राज्यलक्ष्मी-
पर्याप्तस्वान्तवृत्तेर्नहि मम गणनागोचरे ते नरेन्द्राः ।
सेवाहेवाकभाजां तव जननि जगत्यब्जभूर्वा हरिर्वा
त्र्यक्षो वा स्यात्क्रोटौ विलसितुमनलं केऽपि मूढा नृकीटाः ॥ ३४ ॥
त्वद्ध्यानैकावधानप्रणयनमुलमानन्दलीढान्तरात्मा
नाहं भूपानुपासे पुरहरसुतनो संपदे किंपचानान् ।

पुंसां चिन्तालतामिर्हृदि तव चरणोपासनामद्रिकन्ये
नावध्यन्ते कतीमाः कति कति तुरगा गेहवाह्याङ्गणेषु ॥ ३५ ॥
कुर्वन्तु स्वैरमुर्व्यां कतिचन समयक्षेपणं भूपगेह-
द्वारावस्थानधारापरिचयरचनोदीतरागा वराकाः ।
त्वद्ध्यानारम्भलब्धोदयनिरतिशयानन्दनिष्यन्दसिन्धो-
रन्तःस्वच्छन्दचारैर्जननि वयममी कालजालं नयामः ॥ ३६ ॥
सिद्धान्द्रूपालदत्तद्विरदवरघटामांसलस्निग्धमुग्ध-
स्कन्धाभोगाधिरोहक्रमसमरतमख्यातिसंप्रापितोऽपि ।
देवि त्वद्भृत्यशालारजकयशजुपामन्वये रासभाना-
मूर्ध्वालेख्यारोहहनमतितरां युक्तमित्येव मन्ये ॥ ३७ ॥
साकं भूनायकेन प्रचुरमणिभरोद्दामरं सामरस्या-
दध्यारूढासनार्धं युगपदभिमुखीभूय संलापतोऽपि ।
न्यग्घद्रात्रं निषेधस्तुतकरतलं निर्भरोत्कम्पमम्ब
त्वद्गेहद्वाःस्थवेत्रप्रहरणसमयत्रासदैन्यं परं नः ॥ ३८ ॥
आन्दोली चतुरन्तयानतुरगश्वेतातपत्रद्विप-
प्रायां संपदमायदेति गिरिजे न त्वां कदाप्यर्थये ।
याचे केवलमेतदेव बहुधा त्वत्पादपङ्केरुह-
द्वन्द्वाराधनचातुरीगुणनिकासाम्राज्यसिंहासनम् ॥ ३९ ॥

तदनु तुहिनजगतीधरादवतीर्य स पुनरार्यमिश्रो निजवचःस्तुतिधौतत्स्या-
यपोधकर्दमनिकरस्य सगरसुताहुतिहुताशनीकृतमघवत्स्यः कपिलमुनेराश्रम-
पदमुपाश्रयत ।

अभिषिच्य भसितराशीन्पुरदरनिर्माल्यसलिलपूरेण ।
निरवापयत्पितॄणां भगीरथो यत्र निरयबाधामिव् ॥ ४० ॥
अद्याप परयुरद्दामपदाय मतामगृषितवतीव ।
क्लिष्यति सुरगवन्ती नर्मसखं यत्र नयनयोर्मिकरैः ॥ ४१ ॥

तत्र च जलधिमध्यमयविदमवार्दात् ।

मार्गीरर्थानिमभिवानिधानां कांचित्कुमारीमुपनीय गौरीम् ।

असौ वरायातिसृजन्पितॄणां चक्रे मुदं चण्डकरान्वयेन्दुः ॥४२॥
अहस्करापत्यसरस्वतीभ्यामभ्यर्णमादाय विमुच्यमाना ।
अमुं नवोढेव''''ख शुसिन्धुराबद्धभङ्गा पतिमभ्युपैति ॥ ४३ ॥
वारं वारं प्रौढवातानुपङ्गाद्वेगेनायं वेपते वीचिमाली ।
कुम्भीयोनेः कुक्षिवास्तव्यमग्निं ध्यायं ध्यायं त्रासमृच्छन्नियोचैः ॥४४॥

मन्थानशैलमथितोऽपि घटीभवेन
ग्रस्तोऽपि दाशरथिना कृतबन्धनोऽपि ।
उद्दामवाडवहुताशनपीडितोऽपि
गम्भीरतां न हि कदाचिदयं जहाति ॥ ४५ ॥

अथ नीलाद्रिमासाद्य कृती स कृतवन्दनः ।
अस्तौदित्थं जगन्नाथमघनिर्माथकर्मणे ॥ ४६ ॥
चरितं तव प्रथीयः शक्यं मितया न मे गिरा स्तोतुम् ।
नासामणिर्न भवितुमर्हति मानाधिकं रत्नम् ॥ ४७ ॥
अतिलघुनापि च वचसा मधुमथन तव प्रणौमि महिमानम् ।
तुभ्यं त्रिभुवनवपुषे तुल्यं कथमर्प्यते माल्यम् ॥ ४८ ॥
मम यन्मनुष्यजन्मनि भवत्सपर्यापराङ्मुखीभवनम् ।
स''''नैयनीतनिर्गमसमये मन्थानगुणभङ्गः ॥ ४९ ॥
अन्यार्थमपि भवन्तं परिचरता प्राप्यते गतिः पुंसा ।
आमोदमेणनाभेराजिघ्रति किं न पणितापि ॥ ५० ॥
भवतः प्रपद्यमानश्चरणौ पदवीं समश्नुते परमाम् ।
को गन्धगजाधिरूढः क्षुद्रं प्रतिपद्यते द्वारम् ॥ ५१ ॥
प्रकृतिजयिनस्त्वदङ्घ्रेः पातकराशिरपि किमु भवेल्लक्ष्यम् ।
अस्तमरविन्दयोनेश्चटकोपरि किं नु संधेयम् ॥ ५२ ॥
ईषल्लभा मनीषिभिरीहितसंपत्प्रसादविषयैस्ते ।
हैयङ्गवीनसङ्गं ह्यादधतो न खलु घृतचिन्ता ॥ ५३ ॥

१. 'ह्यैयङ्गवीननिर्मथसमये' इत्युचित प्रतिभाति.

करुणागुणपरिणाहः कंसारे तव निसर्गसंसिद्धः ।
आधीयते न केनचिदमृततरसौधस्य माधुर्यम् ॥ ५४ ॥

अनुपदमतिलङ्घ्य जनपदशतानि विबुधप्रण्यः स पुण्यस्थलीपु शस्तं गयाक्षेत्रमयासीत् ।

दृश्यते तटिनी यस्मिन्नन्तस्ताकारशालिनी ।
अपि फल्गुः स्वयं पुंसामफल्गुफलदायिनी ॥ ५५ ॥
अधिमौलि गयामरद्विपो विबुधैर्यत्र कृते पदार्पणे ।
भुवनत्रयमस्तके पुनः पितरो हन्त पदं वितन्वते ॥ ५६ ॥
फटितटिघटिततटिनिमांशुकं रमाधवं छविजितमारमाधवम् ।
जगत्त्रयी प्रणमति यत्र मौलिना गदाधरं किसलयमं गदाधरम् ॥ ५७ ॥

तत्र च विहितकर्तव्यकलापोऽयमभिरूपो विनिर्गत्य ततः समग्रगुणसंभृतेन कुटुम्बिनीयुगेन विविधतीर्थसमूहमवगाहमानो विमानितदिविपदाहारसंपदं व्याहारमुदजृम्भयत ।

अहस्करेऽप्यलघुतमिस्रतस्करे कुमुद्वतीं समधिगता कुमुद्वतीम् ।
पवित्रितक्षितिरियमत्र चक्षुषी पुनः पुना रमयति मे पुनःपुना ॥ ५८ ॥
संध्याटवीचारविबद्धमूर्तिः कुर्वन्मुहुः कूलविदङ्गलीलाम् ।
स्वैरं प्रमर्दन्निह शोणभद्रो गवामसौ गच्छति संनिवेशम् ॥ ५९ ॥
शर्वाणीचरणसरोजयन्तलाक्षाजम्बालभ्रमजनिहेतुधातुशाली ।
विन्ध्याद्रिर्वितरति मे नितम्बसीमाविस्तारस्थगितदिगन्तरः प्रहर्षम् ॥ ६० ॥
अध्यास्ते रुचिरममुष्य शृङ्गमेका सा काचित्त्रिभुवनसंज्वरापहर्त्री ।
निर्व्याजप्रणिहितनीलकण्ठहर्षा वर्षन्ती कमपि रसं बलाहकाली ॥ ६१ ॥
कल्याली हृतमधुकैटभावलेपा लोकान्तंकरणतुलायदर्पहर्त्री ।
चामुण्डा शकलितरक्तबीजदम्भा शुम्भघ्नी जयति निशुम्भसूदनीयम् ॥ ६२ ॥
विदवस्मादपि धरणीधरेन्द्रधन्ये विन्ध्योऽयं निरवधिभागधेयशाली ।
आक्रान्ताखिलभुवनापि यस्य नाम्ना विख्याता परमसि विन्ध्यवासिनीति ॥ ६३ ॥
देवि त्वत्पदसन्निदर्शितातिरागा शुङ्गेषु द्रुमविटपेषु लम्बमानाः ।
शैलेऽस्मिन्नातत्तमवाप्नुवत्यमाजो दृश्यन्ते धृतनियमा इव प्रवालाः ॥ ६४ ॥

कुब्जत्वं दधदपि कुम्भयोनिभक्त्या विन्ध्याद्रिर्विबुधनिवासतोऽपि तुङ्गः ।
संचारं सदयगिरीशपाणिपद्मस्पृष्टाभ्यामिह वितनोषि यत्पदाभ्याम्॥६५॥
मच्चित्ते······महिषासुरोत्तमाङ्गे विन्ध्याद्रेरधिशिखरं च विश्वमातः ।
निःशङ्कं निहितपदाब्जया भवत्या काठिन्यं क नु वद काममन्वभावि॥६६॥
वेलायां विषमकृतान्तवाहघण्टासंरावश्रवणसमाहितव्यथायाम् ।
मञ्जीरक्वणितमनोहरं पुरस्तादास्तां नश्चरणसरोजमम्बिकायाः ॥ ६७ ॥
पारीन्द्राः परिभवमापिता निकामं मध्येन स्मरहरवल्लभे भवत्याः ।
तत्वाहक्तिभिरतरङ्गिताशु मन्ये बध्नन्ती(न्ति) क्षितिमिह·····भ्यतो गुहासु६८
उत्तुङ्गा बलवदुदारकान्तिभाजो वर्तन्तां शतमिह वारणेन्द्रकुम्भाः ।
सोदारस्तव कुचभारयत्किमेते पञ्चास्यप्रसभविमर्दसंभ्रमाणाम् ॥६९॥
शर्वाणि स्तनभरसंपदा परं ते विन्ध्याद्रिर्विगलिततुङ्गतावलेपः ।
श्रीले(डे) न क्षितिमभजद्द्विजस्तु भेजे मरुभ्यार्ति शिव शिव भाग्यरीतिरेषा७०
संत्रातुं जनमिह सर्वहिंसकेभ्यो वात्सल्याद्वहसि वरायुधानि हस्तैः ।
हन्तैतद्भगवति साहसं यतोऽमी रज्यन्ते नवसुमनोजिघृक्षयापि॥ ७१ ॥
चन्द्रस्ते वदनमिषेण शैलकन्ये विन्ध्याद्रौ वसति विधुंतुदैकभीत्या ।
पर्यन्तभ्रमणमिष(षा)त्तरक्षुवीक्षाविश्रासव्यतिकरविद्रवत्कुरङ्गः ॥ ७२ ॥
त्वद्बिम्बाधरतुलना शिवे तदानीं माद्धुर्यादिह सहकारपल्लवेषु ।
धात्रा चेन्मकरन्दसारधारानिष्यन्दः कुसुमवदेषु निर्मितः स्यात् ॥ ७३ ॥
स्वच्छन्दं विलसतु चन्द्रिकाङ्कुराणामुद्भेदः किमपि सुधारसोद्गमश्च ।
वक्रेन्दौ तव वरवर्णिनि स्मरारेराश्चर्या न किमिह सूतिरम्बुजानाम् ॥७४॥
अस्याद्रेरनुवनमध्यमम्बुजातैर्वेतण्डव्रजकरदण्डपातभीतैः ।
सारङ्गैरपि चकितैर्वनेचरेभ्यः सर्वस्वं निहितमिव स्वकं त्वदक्ष्णोः॥७५॥
फुल्लासु क्षितिरुहपुष्पमञ्जरीषु भ्राम्यन्ती ततिरिह भाति षट्पदानाम् ।
पृथ्वीभृत्प्रियतनये विलोकयन्त्याः कान्तारश्रियमिव ते कटाक्षमाला ॥७६॥
पाठीनध्वजपरिपन्थिकायमायाकैलासक्षितिधरकालमेघपङ्क्ते ।
मातस्ते हतजनिमार्गपर्यटाख्यानिष्टप्ते मयि निपतत्वपाङ्गधारा ॥ ७७ ॥

श्यामभ्रच्छविमिह वीक्ष्य नीलकण्ठास्तुष्यन्तः सपदि वितन्वते कलापान् ।
त्वत्केशद्युतिविसरापहारशङ्कां निर्मोक्तुं निपुणमिव प्रदर्शयन्तः ॥ ७८ ॥
उद्भिन्नस्मितलवमुल्लसत्कपोलं लोलाक्षिभ्रुवमतिलोभनीयनासम् ।
बिम्बोष्ठं भृतमणिकुण्डलाभिरामं वक्त्रं ते जननि वयं न विस्मरामः ॥७९॥
विनिर्गतानविहितपुण्यदुर्लभत्रिमार्गगासलिलविगाहनाय नः ।
पदे पदे बहलविपत्तिशङ्कया विषीदतः सुखयतु विन्ध्यवासिनी॥८०॥

अपि च ।

रक्षति दुर्गा यन्तं विपदः स्वगुणान्कृपामृदुर्गायन्तम् ।
समहृत कासरदनुजं तमपि च या शुम्भमन्तिकासरदनुजम् ॥८१॥
देवी सा मे दुरितं क्षपयतु कृपया हरिस्वसा मेदुरितम् ।
शक्तिषु परमा नन्दं जनकं किल या निनाय परमानन्दम् ॥ ८२॥
शुचमिह नोपलभन्ते वपुः स्मरन्तो बलार्दनोपलभं ते ।
स्थितमनिदानवलक्षे हर्यक्षे चण्डि लूनदानवलक्षे ॥ ८३ ॥

अपि च ।

स्कन्धादवप्लुत्य हरेः सलीलमाक्रम्य पद्भ्यामवनीतुलायौ ।
संधित्सया चापगुणैर्निषङ्गादुदर्चिषं मार्गणमुत्क्षिपन्तीम् ॥ ८४ ॥
प्रहारकेलिस्पृहया रथाङ्गनेमिप्रहल्यप्रनिजाग्रहस्ताम् ।
तिर्यङ्मुखीं पाणिधृताञ्चलस्य कम्बोः समुद्धोषणकर्महेतोः ॥ ८५ ॥
उदस्तहस्तोपहितत्रिशूलनिर्भिद्यमानं निजपार्श्वमाङ्गात् ।
निर्गच्छतो निर्जरशात्रवस्य चर्मासिपाणेः शिरसश्छिदायै ॥ ८६ ॥
आलम्ब्य केशानवधूय खेटं पाणावधिक्षिप्तकृपाणवल्लीम् ॥
दरोच्छ्वसन्मध्यमदृष्टिरिक्षुदभिस्फुलिङ्गावलिभीषणास्याम् ॥ ८७ ॥
विश्वत्रयापद्विनिवारणाय संनाहमेवं समरे दधानाम् ।
किरीटचन्द्रांशुकृताभिषेकामम्बामहं भावनयावलम्बे ॥ ८८ ॥
तमसामर्दिनि विधृतमसाधिपं तमसा जाह्नवीपूरं तमसा विगाहते ।
निर्जेतुं दुरितावलीं सति कलौ निःसीमवीर्योदयां
देवो मेलयति स्म यत्र सुदृढं तिस्रो महावाहिनीः ।

हन्त सत्यपि रघूद्वहे गिरा प्रस्तुवन्ति कवयः परानपि।
यस्य चक्रमपदानमेव या प्रादुरास भुवि पद्यरूपिणी॥ १०८॥
तद्विना दशरथावनीसुहृन्मानिनीजठरशुक्तिमौक्तिकम्।
वाचदृक्जनवाग्सुखस्य किं विद्यते भुवि विभूषणान्तरम्॥ १०९॥
संयमिप्रवरसाधितस्य किं पायसस्य परिपाकवैभवात्।
माधुरीमधिगतो मद्वियर्सा राघवो रमयते ममाशयम्॥ ११०॥
वत्तया विधिकृतत्रिशङ्कुना निर्ममो निखिलशस्त्रविद्यया।
आधिशङ्कुभरमापयन्द्विषामाशयेपु रघुनायकोऽवतात्॥ १११॥
पादरेणुपरमाणुयोगतः सिध्यता युवतिसृष्टिकर्मणा।
साधयन्नपि मतं मुनेः कथं जानकीपतिरतर्कमार्गगः॥ ११२॥
कुर्वतो हरगुणमकृष्टतामात्मनो दशरथाद्वजन्मनः।
गौरवं न सहते स्म कार्मुकं कामशासनकरोपलालितम्॥ ११३॥
धर्मनिर्मथनकर्मठं हठात्कल्पयन्नपि करातिपीडनम्।
मेदिनीहृदयहारिभिर्गुणैर्मेदुरो जयति मैथिलीपतिः॥ ११४॥
प्रक्रमं रचयतः मनर्तितुं विक्रमस्य किल विघ्नशान्तये।
गेशचापतृणभङ्गमाचरन्नेष दाशरथिरेव सेव्यताम्॥ ११५॥
दो.प्रतापशिखिनः समिन्धने दोहलीव निजबाहुलीलया।
काकपक्षधर एव कार्मुकं पाटयन्पशुपतेः स वर्ण्यताम्॥ ११६॥
आप भङ्गमवनीसुताभुवः पूर्वमेव पुरवैरिकार्मुकम्।
अर्कवंशसुकृतैरयं पुनः कीर्तिमानवतु केलिमानुषः॥ ११७॥
हन्तुमुद्यमवतो निशाचरानट्टहास इव रामतेजसः।
पूरयन्दश दिशः पुनातु वो भैरवः शिवधनुर्भिदारव.॥ ११८॥
मैथिलीहृदयमञ्चशायिनः सौखशायनिकशेखरः प्रभोः।
पातु वो रघुवतंसदोर्लताभज्यमानभवचापनिस्वनः॥ ११९॥
आत्मवैरिधनुरार्तिनानटद्वीरचोदितविदेहजार्पिताम्।
हस्तरङ्गवरणोत्पलस्रजं धारयन्नवतु वो रघूद्वहः॥ १२०॥

जातरूपफलके शनैः शनैरङ्गसंगतिभियापसत्वरीम् ।
मन्दमन्दमपदेशपूर्वकं मैथिलीमनुसरन्स पातु वः ॥ १२१ ॥
वार्धिनेमिजनुषो वधूमणेराशये शयकुशेशयेऽपि च ।
कौतुकस्य कलयन्निबन्धनं नन्दनो दशरथस्य पातु नः ॥ १२२ ॥
मैथिलीपरिणयोत्सवे मुखं मन्दहासमधुराधरं विभोः ।
घर्मवारिकणहृद्यमस्तु मे [मङ्गलाय] शुभिकाविभूषितम् ॥ १२३ ॥
आश्रममस्तमरे शनैर्विवादाहितापसरणे कथंचन ।
संगते सदसि मङ्गलाय मे जानकीरघुवतंसयोर्भुवौ ॥ १२४ ॥
मैथिलीमनुकुलावतंसयोः पुष्णती पुलकजालमङ्गके ।
शोभनस्तुतिमया शुभाय मे कल्पतां सुदृगलक्षुकावि (?) ॥ १२५ ॥
भाविनि त्रिदशवैरिभञ्जने साध्वि मे कुरु सहायतामिति ।
याचमान इव जानकीकरं पाणिना परिमृशन्मुदेऽस्तु सः ॥ १२६ ॥
चम्पयष्टिकरपीडने रुषः शान्तये किमुपलाधिरोहणे (?) ।
जानकीपदसरोजमामृशन्पाणिना रघुपतिः प्रसीदतात् ॥ १२७ ॥
हन्त हृदयमपरं मदागमः शंसति ध्रुवमितीर्ष्ययेव सः ।
तत्प्रदर्शनविधौ धरासुधि मन्दवर्णवचनो धिनोतु माम् ॥ १२८ ॥
मैथिलेन्द्रमहिलाभिरेकतः स्थापितौ सहशतादिदृक्षया ।
..........माहितस्थितौ चिन्तयामि जगदादिदम्पती ॥ १२९ ॥
मैथिलीसहचरं मनः सखे सर्वदैव तदवेहि दैवतम् ।
घोरजन्मकुहनापयोनिधेस्तारकं तव तनुप्रतारकम् ॥ १३० ॥
सन्तनामहं धीशसम्मतपरं (?) देवता विगणयामि नैव ताः ।
राममेकमभिरामवैभवाराममाशरविराममाश्रये ॥ १३१ ॥

तमालच्छायालः सततमनुकूलम्नुभृतां
वचः केलीशे····(?) विशगतमधूलीमधुरिमा ।
जगत्सेता सीतापतिरहितजेता गुणगणैः
स नाथो दृग्नाथो जनुषि रघुनाथो विजयताम् ॥ १३२ ॥

श्येनानेषे निरीक्ष्यते स शिबिराभोगः प्रयागाभिधो
धीराः स्वैरमिह प्रयान्ति पदवीं देहत्यजं शाश्वतीम् ॥ ८९ ॥
देहिनामिह तटस्थितिस्पृशां पुण्यमात्मजमिमाः पुनः पुनः।
स्फारविस्मयकृते परस्परं संगताः प्रस्तुवते सरिद्वराः ॥ ९० ॥
अन्योन्यमायाभिभिरूर्मिहस्तैरास्कन्दकर्मण्यनयोः सपत्न्योः।
साक्ष्यं न साधीय इतीह सा किं सरस्वती संवृतमूर्तिरास्ते ॥ ९१ ॥
जाह्नवीरविसुतारजतायःश्रृङ्खलायुगलसंहतमेनम्।
क्रीडितुं स हि विमुक्तियुवत्या केलिमञ्चमयमञ्चति लोकः ॥ ९२॥
यियासतामत्र निमज्ज्य नाकं हित्वा तनुं मुक्तिमभीप्सतां च।
वैवस्वतीविष्णुपदीमिषेण वेदोपदिष्टाध्वयुगं चकास्ति ॥ ९३ ॥
निर्वापितानामिह विष्णुपद्या नृवर्गकान्तारभवानलानाम्।
विसृत्वरी धूमपरम्परेव विराजते चण्डमरीचिकन्या ॥ ९४ ॥
सहजमलिनं विद्यावर्त्म स्वभावमलीमसा
विधिपदविका चित्रः पन्था विमिश्रितयोस्तयोः।
इति पृथगवस्थित्या संमेलनेन च देहिना-
मिह विवृणुतो नानामार्गान्द्युसिन्धुकलिन्दजे ॥ ९५ ॥
निर्माति घर्मांशुसुताभुजङ्गया निर्मोकशङ्कामिह गाङ्गमम्भः।
यां वीक्ष्य लोकाः समवर्तिलोकयात्राकथामप्यवधीरयन्ति ॥ ९६ ॥
अनेकदेशोन्मिषदभ्रसिन्धुप्रवाहखण्डामिव भानुकन्याम्।
पश्याम्यविद्यामिव तत्र तत्र प्रभिद्यमानां विषयप्रकाशैः ॥ ९७ ॥
उन्नेतुमुद्वेलभवाब्धिमग्नान्कृतोद्यमाभ्यां कृपया शिवाभ्याम्।
प्रसार्यमाणाविव बाहुकाण्डौ पश्यामि नद्योरनयोः प्रवाहौ ॥ ९८ ॥
वेगाविद्धसरोजकुड्मलकुचं विक्षिप्तवीचीभुजं
फुल्लेन्दीवरदृष्टि बुद्बुदनिभाविर्भूतरोमोद्गमम्।
चुम्बत्फेनविपाण्डुकञ्चुकमुभे दूरात्समभ्यागते
गाढालिङ्गनमत्र हन्त तनुतो गङ्गाकलिन्दात्मजे ॥ ९९ ॥

क्वापि प्रस्तुतदोर्मृधे इव मिथो वीचीभरैराहते-
रेतैरात्तजयश्रियाविव कुतोऽप्यन्योन्यकृष्टाक्रमैः ।
विद्राणे इव साध्वसेन कुहचिद्वक्रापसारत्वरै-
स्तन्वाते सरितौ विडम्बनमुभे तत्तादृशानां नृणाम् ॥ १०० ॥

कालिन्दीसुरनिम्नगे विलसतः कालावदाते ययो-
रंशूनामिव संतती तनुभृतामन्तस्तमिस्रापहे ।
पुण्यैरद्य पुराकृतैर्वयममी तत्तादृशौ तावुभौ
वेणीमाधवशूलटङ्कगिरिशौ वीक्षामहे चक्षुषा ॥ १०१ ॥

वामे भागे वरतनुमयं शूलटङ्केशमीडे
संध्यानृत्तभ्रमणरचनासङ्गिनो यस्य कण्ठात् ।
स्रस्तां मुक्तास्रजमिव महाकृष्णसर्पाश्चिवार्षा-
मध्ये पश्याम्यमरतटिनीमर्ककन्योपगूढाम् ॥ १०२ ॥

भुवनत्रयपारवर्ति पुंसामधिगन्तुं पदमाहितस्पृहाणाम् ।
अनुभूतचरादिविप्रयागादयनं नेह परं भुवि प्रयागात् ॥ १०३ ॥

इत्यालपन्नयमुत्तीर्य सुरधुनीमनीदृशसंपत्तिपेशलान्कोसलजनपदलोकपञ्चनघ-
गुणपरिभूतधनदपुरुहूतपुरमभिहील साकेतम् ।

विमलां प्रकृतिं विभ्रणवती सततं भावितसर्वमङ्गला ।
मदलंकरणाय कल्पते हिमवन्मानससंभवा नदी ॥ १०४ ॥

[illegible]
[illegible] ।

प्रदिशति यत्र कौतुकमशीतकराभिजन-
प्रभवजनाधिनाथहयमेधवितानमही ॥ १०५ ॥

तत्र स रामभद्रं प्रणिपत्य नुतिमित्यवानीत् ।

कल्पयत्यवनिकर्णजन्मनो वक्त्रहि श्रवणहर्षवैभवम् ।
संभवे जनकमोदसंपदामात्मजोक्तिरयते निदानताम् ॥ १०६ ॥

सूनुनैव सुवचं प्रचेतसो वस्तु वर्णयितुमाद्रियामहे ।
राघवैकसुभगे रणाङ्गणे व्याहृतं किन्न वल्मीकसूनुरपि ॥ १०७ ॥

मणिगणपरिणद्धे मण्डले पुष्पकान्तः-
सुरतरुतलभाञ्जि स्वर्णपीठे निषण्णौ ।
विसरमुपहसन्तौ विद्युदम्भोदभासां
मनसि मम रमेतां मैथिलीरामचन्द्रौ ॥ १३३ ॥

सकृदेव शरीरिणः प्रपन्नान्भयदीयाः स्म इति प्रजल्पतोऽपि ।
परिपातुमभीतिलम्भनेन प्रतिपन्नव्रतमस्ति दैवतं नः ॥ १३४ ॥

अपि च ।

तमुपास्महे तपोधनमहिमार्जितपायसार्थपरिपाकम् ।
पङ्क्तिरथपार्थिवेन्दोरन्तिमऋणभागमोचनं द्रविणम् ॥ १३५ ॥

भक्तिपरितोषिताशयकं कालिके कलितोपदेशविभवेन (?) ।
त्रिजगदरिष्टविदारणदीक्षादृढबद्धर(ल)क्ष्यतां यातम् ॥ १३६ ॥

सुस्तं तस्य सुकेतं मभदनतनुमेदिनीप्रतप्तस्य (?) ।
आशरकुलाशनोद्यमभाजः(जं) प्रा(बा)णाहुतीकृतसुबाहुम् ॥ १३७ ॥

अपि भं[ग]वदङ्घ्रिरजसा संहितचिरलुप्तनियमिसंसारम् ।
परिणीतधरणितनयं पशुपतिचापाधिरोपणपणेन ॥ १३८ ॥

दैत्यभिदो धनुषा सममात्तभृगुप्रवरशक्तिसर्वस्वम् ।
त्रातारं वसुधाया अन्ते सह सीतयाऽनुभूतसुखम् ॥ १३९ ॥

जगति परिभवयोग्या न खलु श्वश्रूरिति मतीत्येव ।
धरणिमनपेक्ष्य सार्कं तत्सुतयाध्युषितचित्रकूटतटम् ॥ १४० ॥

स्ववशमुपेयुषि विभवे विमुखस्य भ्रातुरर्पितेन करे ।
चरणत्राणेन चिरं कारितवन्तं क्षमापरित्राणम् ॥ १४१ ॥

आत्मीयादपि चापादतिरभसभृतो जवातिरेकेण ।
विस्मारिताभिदैत्य(?)व्यञ्जितकरुणं कृतागसि खगेऽपि ॥ १४२ ॥

ना(सा)क्रमवगाहमानं जनकापत्येन दण्डकारण्यम् ।
चेतस्तपोधनानां शीतलमम्बश्च····दायाः (?) ॥ १४३ ॥

१. भगवतः स्वस्येति व्याख्येयम्. २. नियमोऽस्यास्तीति नियमी मुनिः. अत्र गौतमस्तस्य संसारोऽहल्येति बोध्यम्. ३. श्वश्रूः पृथिवी. ४. विस्मापितादितेयमिति संभवति.

सेतुमिवारिमिवाब्धे(?)श्छेदितवन्तं निशाचरीनासाम् ।
प्राग्(ह)तविराधपदवि चारितरक्षश्चतुर्दशसहस्रम् ॥ १४४ ॥
उन्मीलितखरदूषणमुर्व्या रिपुयशस्तिरोधानाय ।
चिरकालविरहसीदन्मातृसदेशोपनीतमारीचम् ॥ १४५ ॥
सदयोदयं सपक्षे पक्षिणि दशकण्ठयानपक्षेऽपि ।
हनुमन्मुखेन संहितसुग्रीवं स्वप⋯⋯भाजकबन्धे (?) ॥ १४६
सालान्सप्तमहीद्रा(ध्रा)न्फणिपतिभवने च पत्रिणैकेन ।
दारितवन्तं तरसा सख्यैरविस्रम्भसम्पदं साकम् ॥ १४७ ॥
विमतश्वापदमृगयाविधिशीलतया विधाय निजमूर्तिम् ।
दत्तहृतिमर्मनन्दनदीपकमृगयञ्चितात्मने हरये(?) ॥ १४८ ॥
हरिणपदाना हरिणप्रतियादिव दूरतः प्रयातार्थे ।
मणिमणि(गण)मुद्रां प्रेषितवन्तं प्रेयसीमिव वयस्याम् ॥ १४९ ॥ (?)
प्रस्प(सू)नरमहः पुरेहे(?)सुदृशश्चूडामणौ समीरभुवा ।
संभावितेऽपि संनिधिमाचितमोहान्धकारसंदोहम् ॥ १५० ॥
भुज(भव)जलधिकर्णधारं भजतादे(मे)नं कियान्भवाब्धिरिति ।
सरुषा विभीषणेन प्रतिपच्चिक्कवाङ्क्रिपाथोधिम् ॥ १५१ ॥
दयया हृदयमरातेरनुजं राज्याभिषेकसलिलेन ।
प्लावितवन्तम(न्तं ह्य)धिकं प्लवगभटानां च हर्षबाष्पेण ॥ १५२ ॥
सेतुपथेन जितवति सुग्रीवभटे तटं सुवेलस्य ।
अवधि जगति वृन्दं तान् भावितवन्तं प्रतापयशसी से(?) ॥ १५३ ॥
अखिलजगदन्तरङ्ग⋯⋯⋯⋯⋯⋯⋯ ।
आत्मन इवाश्रमस्थितमहिरवन्तं धनुर्गुणस्यापि ॥ १५४ ॥ (?)
छादितसकलदिगन्तैः कपिभिः पुर एव कलितरोद(ध)स्य ।
निजतेजस इव तापान्निर्यातायं द्विपे प्रपदिष्टवधम् ॥ १५५ ॥(?)
हुतवहक(के)(नि)प(प्प)तितां स्वकीयचारित्रशुद्धि(द्ध)विस्रता(म्मा)म् ।
अधिरोप्य पुष्पकं पुनरायान्तं स न (सहैव) साकेतम् ॥ १५६ ॥

१. सत्वरेति प्रतिभाति.

प्रकृतिविरचिताभिषेकपाथः प्रमुदित................ ।
सकलभुवनगाथ(?) शासनाङ्का मधिगतमखण्डिता समृद्धिम् ॥ १५७॥

इति श्रीवाधूलकुलतिलकस्यातिरात्रयाजिन समरपुङ्गव-
दीक्षितस्य कृतो यात्राप्रबन्धेऽष्टमाश्वास ।

---

अथ नवमाश्वास ॥

................ ...........

........ निजभावयच क्रियाभि. ।
सभिच यत्र सुमन सरिता रमन्ते
सागे(के)[ तके ] च (?) सरयूरपि गोमती च ॥ १ ॥
नेदीयसीमतिचिराय निजैस्तपोभि-
र्वाराणसी मति ततो वल........ ।
क्षेत्त्रान्तराज्यततिरेकमिव सह(?)
स्तेन व्यदायि जगतीतलपर्यवाप्त्या (?) ॥ २ ॥
प्रदक्षिणप्रक्रमजन्मनोर्व्या क्लेशेन काशीमुपतिष्ठतीति ।
कृपावती मङ्गममस गङ्गा वातेन वीचीजनुषा व्यनैषीत् ॥ ३ ॥

अनन्तरमवनीसुरधुरधरेण गच्छता पथि स्वच्छन्दमानन्दनिजभरेण (?) ................व्यधायि । आ कथमग्रत एव हयखुरक्षुण्णमेदिनीक्षोद-मेदस्विभावमासेदुषि समुदये दिशामनुकूलपवनदोलायिताञ्चले ........ ..... . ........ ... . शतशः शताङ्कपीता .... . .. ....कावेरीव समवेयमानसरणि परिपदियमालक्ष्यते । अथ खलु माघचतुर्दशीवासरे वाराणसीनगरवास्तव्यस्य शर्वरीरमणचूडामणे रामाराधनाय भक्तिपरवतीय प्रस्थितवती । अहो पुनरमुष्य वासरविशेषस्य वैभवातिशय ।

जनयति शिवरात्रिव्रतसकल्पो विश्वसृष्टिसकल्पम् ।
जागरणं चार्याणा सकलजगद्धारमरणजागरणम् ॥ ४ ॥
आश्रितगिरीशपार्श्वैरपनीतनिमेषपर्वतेनायातैः ।
पदरि(?)समाक्रमचक्रितैश्चतुरैरतिवाह्यते शिवरात्रिः ॥ ५ ॥

अवाप्तुमिच्छा यदि वामहर्निशं भजाग्रतोः पङ्कजयोः सगन्धताम् ।
विधीयतामस्तनिमेषमुद्रणं दृशौ युवाभ्यां शिवरात्रिजागरः(रे) ॥ ६ ॥

अनिमेषता जनानामनिमेषत्वाय भवतु शिवरात्रौ ।
इह पुनरभक्तभावो हेतुः कथमीश भक्तभावस्य ॥ ७ ॥

शिवरात्र्युपविधेः शीलं यामि⋯⋯⋯यतकृतीनाम् ।
शिवजगत्कदम्बककरोपि तृप्तये⋯⋯⋯⋯नालम् ॥ ८ ॥(?)

⋯⋯औपयस्त्यमविज्ञातरात्रिः⋯⋯⋯हसा हसन् जनः ।
अत्र सिध्यति यतीति रामणो कालकूटगरलेन हारिणा ॥ ९ ॥ (?)

ये स्थाणुतां गिरिशयोग्यदला(लो)पहारै-
र्बिल्वद्रुमस्य शिवरात्रिदिने दिशन्ति ।
संसारिणामुदयते [ भविकं हि ] तेषा-
मात्मीयकर्मफलमत्र न को नु भुङ्क्ते ॥ १० ॥

अहो मम पचेलिमानां प्राचीनतपसामनुभावो यदस्मिन्नहनि विस्मया-
तिरेकमुपहरिष्यति मदीयं चक्षुषोरसदृशप्रभावसाधीयसी वाराणसी।

अभ्यर्थ्य जम्भरिपुणापि वितीर्यमाणं
सर्गानिकाममपि गणाय मत्पतीश्णान् ।
अस्तपितृस्त्रियतमद्य निजाग्रहस्तं
न्यस्तार्घ्यपात्रमुपयास्यति नाभिजन्मा ॥ ११ ॥ (?)

कथमिवैतस्य कथयामि महिमानमानन्दकाननस्य ।
कैलासशैलादपिकामग्रत्रीश्रेतोविनोदोपचयप्रदात्री ।
काशी भवाशीविषवैनतेय(सत्) पाटिका पाटयते तमांसि॥१२॥(?)
बिभर्ति चन्द्रः शशमित्यकीर्तिं कुले निरूढामपनेतुकामः ।
वाराणसीजाङ्गलवर्त्मचारी प्रायेण चन्द्रं बिभृते शशोऽपि ॥ १३ ॥
अधिकाशि तरङ्गुरामिपस्पृहया संहरति⋯⋯बलिमृगम् ।
अजिनग्रहणाय राहोर्हरिणश्चायममुं मृगादनम्(?) ।
काश्यामुमाकामुकराजधान्यामैश्वर्यलोभेन कृतासिकानाम् ।
कैश्चिद्दिनैरेव वयस्यकोटौ संश्लेषयतामेति घनं मिथोऽपि ॥ १४ ॥

अखण्डमैश्वर्यमपेक्षमाणाः कथं नु काशीं पुरुषा भजन्ति ।
भवन्ति यस्यां बहुसंपदोऽपि भिक्षाकमध्ये प्रथमं गणेयाः ॥ १५ ॥
यातुं कुत्र सखे व्यवस्यसि(ति) महाम्या(भवाना)नन्दवन्यन्तरे
मा गाः केन ततो गतस्य न मया दृष्टं परावर्तनम् ।
कस्मात्तत्र समेयुषां वसुभृतां वर्ण्यादिपूर्वैरथिर्ति
कोऽप्युत्सार्य बलात्प्रयच्छति निजं रूपं किराताग्रणीः ॥ १६ ॥
अविद्यायां द्वेषं चिरपरिचितायां घटयते
निरुन्धे तत्सूनोरपि च मनसो लालनविधिम् ।
न कामक्रोधादीनपि तु सहते तस्य तनया-
नहो पुंसः काश्यामभिनवजनिः प्रेमगरिमा ॥ १७ ॥
अहो भाग्यं काशीवसतिरसिकानां तनुभृतां
यतो भोगानेते चिरमिह समास्वाद्य विविधान् ।
अलभ्यां ब्रह्मादेरपि समधिकानन्दभरितां
भजन्ते देहान्ते परमशिवसायुज्यपदवीम् ॥ १८ ॥
पुरा भोगत्यागः श्रवणमथ वेदान्तवचसा-
मथोद्बोधः पश्चादमृतमिति शैलीसुलभता ।
मदर्चामाहात्म्यात्सकृदुपगता निग्रहवता-
मलं मुक्त्यै काशीपुरभुवि निवासः क्षणमपि ॥ १९ ॥
आहितनरकावज्ञान् विमुक्तरमाविलासपरितुष्टीन् ।
उच्चैः स्थापितगोत्रानुपास्यते(स्महे) चेतसा महापुरुषान् ॥ २० ॥
वरणो(र्णो)ज्ज्वलम(प्र)सिद्धां करिमुखजलपाति(लि)तां पुरीं पुरुषाः ।
भैरवदुर्गाधिष्ठितमध्यामध्यासते स्वरक्षायै ॥ २१ ॥
वसतिरविहता परस्य पुंसो भवति तपोभरवैभवेन काश्याम् ।
जगदवनपरायणस्य शंभोः स्फुरति कृपालहरीव यत्र गङ्गा ॥ २२ ॥
[वाराणसी] वासविदामविघ्नां दिशन्तु देवा मम भैरवाद्याः ।
दिने दिने सादरमानतानां शतं शतं प्राभृतयानि येषाम् ॥ २३ ॥

निरुपप्लवनिर्मलस्वभावं परमानन्दघनं प्रबोधसान्द्रम् ।
गिरिजागिरिजापयोः स्वरूपं परिपश्यन्त्यधिकाशि भाग्यभाजः ॥ २४ ॥
आरूढशार्करमपावचहनि(?)माश्लिष्टपार्श्वमुमया हरिणाङ्कचूडम् ।
ममार्धमूर्तिरुदके मणिकर्णिकायाः पुण्यैः कदा पुरत एव विलोकयिष्ये ॥ २५ ॥
अस्तीति निर्धार्यमकृत्रिमोक्त्या निरञ्जनैरेव निरीक्षणीयम् ।
आश्चर्यमानन्दनिधिं कदा वा द्रक्ष्यामि तीरे मणिकर्णिकायाः ॥ २६ ॥
भो भो मन्मथलोभमत्सरमदव्यामोहरोषाः सुखं
युष्माभिः क्षपितानि भूरिदिवसान्यस्मासु कृतासिकैः ।
देशानघ यथामनीपितमितो याता न जानीमहे
यास्यामो भवतामगम्यविषयमेतर्हि वाराणसीम् ॥ २७ ॥

तदनु धरित्रीसुधाशनपवित्रीक्रियमाणसमाश्रितजीववर्गापवर्गफलप्रदान-कल्पलतोद्यानमविमुक्तमवलोकयन्नतिनाकसुखभरतरङ्गितो गिरं कृतनवीनमाध्वीकवृपणां साध्वीमिमामभाषत ।

वाराणसि त्रिपुरवैरिकरारविन्दा-
देकं त्वया विधिशिरो हृतमामनन्ति ।
आसेदुषे सविधमङ्कभृते कदा वा
वेधःकरोटिविततां प्रददानि मालाम् ॥ २८ ॥(?)

इदं खलु त्रैलोक्यमहनीयमभ्यर्णवितृणा(?)मधिकर्णपुटं वर्णयतः प्रणवमपर्णासहायस्य वक्त्रेन्दुविगलितैर्विद्यासुधार······विव विहितपरिपूरणं निर्मलं भवतापनिर्वापणक्षममालक्ष्यते परमपावनतीर्थसमुदयाग्रेसरं च कृतं सरः ··········· ।

अतिकलिलनायिन्यामा नाकमा च रसातला-
दिह भरपरीवाहैर्दैवादियं पुरतो मया ।
उरुविमलताहेतुः पाथः प्रसन्नमुपेयुषी
निखिलजगतीमान्या संवर्ण्यते मणिकर्णिका ॥ २९ ॥(?)

स्वमगास सुदर्शनं स्वनित्रं खननेऽस्यासुरशात्रिलेव कर्ता(?) ।
अभिपूर्तिविधायितत्रयांमलिदयं (?) तावदगोचरे नुतीनाम् ॥ ३० ॥

परस्य पुंसः प्रसृताधिराजादाशान्मदीयं मुहुरापतन्ति ।
आक्षिप्यती भामवमूर्मिहस्तैः सर्वस्व रम्यः सहजः स योगः ॥ ३१ ॥
कैवल्यमानक्षमतैकराज्यवैराज्यमूलानवधार्य दोषान् ।
गङ्गानया क्लृप्तविभेदलेशं मेधावती हेलनमादधाति ॥ ३२ ॥

नियतं बिभर्ति निटिलेक्षणायिता-
मपसार्य मूर्तिमगजेव जाह्नवी ।
अत एव भागमदसीयमेककं
मणिकर्णिका किमपि मण्डयत्यसौ ॥ ३३ ॥

कल्लोलमन्दपवनैर्गगनोपगीय-
मासेवते जनमिमां(वा)ति(न्ति)मयाव(न)काले ।
भूरिश्रवापनयपूर्यममुष्य मूर्ध्नि
निक्षिप्यमुद्यमवतीव निजाम्बुभारम् ॥ ३४ ॥(?)

उदयिता(?) क्लिलेन्द्रियोपघाते विषमे जीवितविप्रयोगकाले ।
इह दैवतमेकमाविरास्ते जलदश्यामलकंधरं(रो)जनानाम् ॥ ३५ ॥

अत्रासून्विजहाति यः शिव शिवेत्याकर्ण्य कण्ठध्वनौ
देवीं भूषयितुं गृहीतमनघं धृत्वैव सारं करे ।
आदावप्यतिसंभ्रमेण भगवानर्धेन्दुचूडामणिः
सर्पादेय(व)विमुक्तिधामहगलंकारं विधास्यन्निव ॥ ३६ ॥

ओंकारमन्त्र(न्त्र)विपरीतमुपैतु पाणि-
मालम्ब्य शैलजनुषो मुहुरद्रिधन्वा ।
पाशावमोचनकरी परमोच(क्त)विद्या
सैषी(षे)ति किं प्रकटनाय शरीरभाजाम् ॥ ३७ ॥ (?)

तीरेऽस्याः स्थिरशयनस्पृशां जनानां
तत्ताद्दग् विषमजने ततो द्रुमाणाम् ।
आनन्दद्रविणभरापणो विबद्धः
पार्वत्याः पतिरधमर्णलोकशैलीम् ॥ ३८ ॥(?)

श्रमातुराणां चिरकालबन्धादत्रामृतास्वादकृते पशूनाम् ।
तेषामधीशो दयमानचेताः पाशापनीतं(तिं) प्रसभं विधत्ते ॥ ३९ ॥

मेढ्रद्रथाभीशुभरापदेशादत्रोपदेशावसरे महेशः ।
कुतर्कघोषाविलमङ्गभाजां कर्णान्तरं लक्षयतीव तोत्रैः ॥ ४० ॥

त्रयीरहस्यं विचितं तपोधनैरनेकवर्णास्पदमेकमक्षरम् ।
शरीरिणामत्र शशाङ्कशेखरो व्यनक्त(क्ति)प(पु)र्यामपि वेधमप्युभे(?)॥४१॥

अस्तं कलानामिह षोडशानामादाय दोषाकरमण्डलस्य ।
सतारकस्फूर्तिरहो समभ्रमसाम्प्रतं पुष्यति कालकालः ॥ ४२ ॥

जन्तुः शृणोतीह वृषाङ्कवक्त्रादोंकारमुत्तम्भितपश्चिमाम्भः ।
वामाकृते राशिवधूभवन्त्याः मकारानेमि हृदि याति लज्जाम्(?)॥४३॥

भगवदरअतोरन्तः अन्तः प्रणवाम्यतं (?)
सम्मुखशशिनः सारं शूली विसारयतीह सः ।
.................................................

.............लिह्यमानमिव स्थितम् ॥ ४४ ॥

विद्याविक्षतिसंभ्रमेण मुकुटाद्विश्वेश्वरोऽपि स्थिता-
माद्यत्ते मुहुरैन्दवीमिह कलामाधातुकामः पथि ।
कांचिन्मौक्तिककुञ्चिकामिव नवां सद्यः प्रसत्तेप्सित-
स्फीतामोदनिदानकोशभवन[द्वा]रार्गलोद्घाटिकाम् ॥ ४५ ॥

चूडाशशिस्रुतविपक्वसुधैकलेश-
व्याजादिह प्रण[य]दानविधौ पिनाकी ।
मध्येललाटफलकं मनुजस्य दृष्टिं
कर्तुं पुरा किमपि कल्पयतीव चिह्नम् ॥ ४६ ॥

इह पतिरसिवनामेकहस्तेऽवरुन्धन्
समयमुरभिपाय(?)शङ्कया प्रक्षरन्धम् ।
परिकलयतु मत्तः पाणिनान्येन जन्तोः
श्रवणमपि च गृह्णन्स्पन्दयत्युक्तिसारम् ॥ ४७ ॥

तारकार्धविवृतं तनुमात्रां कुर्वतः कुमुदिनीविटमौलेः।
श्लाघते चतुरतामिव चञ्चन् दक्षिणेतरवपुःस्तनकुम्भः॥ ४८॥
वपुरर्पयतीव विश्वभर्त्रे जनता जीवितमोचनच्छलेन।
प्रणयाक्षर(वर्णना)पदेशाद्दुरीकारमिवातनोति सोऽपि॥ ४९॥
प्रणवमयमेव तिलकं प्रियामुखे लिखति वासनातिशयात्।
अनुसंधातुमिवेशामनुनेष्यन्नहह करुणविवशतां नीतः॥ ५०॥

त्वरितमभितो धावं धावं कृपातिशयात्प्रभो-
रतिसुकृतिनां कर्णेष्वोंकारमत्र विवृण्वतः।
अनभिवल्पतः..............................
स जयतितरां शश्वन्निःश्रेयसार्पणविभ्रमः॥ ५१॥

असौ पुनरत्र निर्वर्तितावगाहविधिरतिवादितार्थनिदाघसंज्वरो निरञ्जनहृदयसद्मनिःशङ्कविहृतिमन्दिरं चिरंतनसुन्दरीसीमन्तसरणिमौक्तिकं समस्तजगत्क्षमस्क्रियासंकेतशालिकान्तारमञ्जानुरागसागरहरिणाङ्कपरिणतानन्दं द्युमणिमरीचिकोचयदुर्जयतमोनिषूदनमनतिकषायचेतसामद्वयगतिं पश्यतिस्म विश्वपतिम्।

पुरत्रयी येन पुरा व्यधायि मन्दारमाला भवता रणेन।
मन्दाकिनी यापि च मौलिभागे मन्दारमाला भवतारणेन॥ ५२॥

निध्याय च निटिललोचनवद्धानतिरिदमवोचत।

स्वर्धुनी प्रकृतितो जलाकृतिः कालिकाश्रितकुटुम्बघातिका।
धूर्जटे त्वमपि धूर्तशेखरो हा तथापि कथमाश्रयन्ति वः॥ ५३॥
विश्वेश्वरत्वं निखिलेश्वराणामाब्रह्मकीटं फलमेकरूपम्।
सर्वेश्वरः प्राणिषु तुल्यवृत्तेः कथं नु सेवां तव कल्पयामः॥ ५४॥

लोके महान् लुब्ध इति प्रवादो मुदा न ते मुग्ध शशाङ्कमौले।
यतः समीपे तव याचकानां प्राणप्रहाणावधिरिष्टलाभः॥ ५५॥
किं तस्य ते वच्मि गिरीन्द्रकन्याकान्तस्य कर्णे जनुतोऽनुभावम्।
यस्यैकदेशे निहितेऽपि या(म)र्त्या भवन्ति दारप्रमुखे पराञ्चः॥ ५६॥

गान्त्रिकेषु महितो भवान् यतो देहिनस्त्वदुपदेशवैभवात् ।
हालहालमपि पातुमीशते नेतुमा[भ]रणतामहीनपि ॥ ५७ ॥

अन्या माध्यमपीतदेहपतनत्रासं……धापालिता
देहेष्वेकपरिक्षयेऽपि भवतां भ्राताऽस्मि देहाष्टकम् ।
अप्यन्ता इह संक्षिप्ता दधत इत्यर्धं जगत्प्राणिनां
व्यक्तं वक्तुमिव प्रकाशिततनुं काश्यां भवं तं नमः ॥ ५८ ॥

सान्द्रानन्दपयोधिवर्धकविधुं संसारविन्ध्याटवी-
दावाग्निं सनकादितापसमनोधामप्रदीपाङ्कुरम्
वेदान्तोपवनान्तरालसततव्यापारकेलीशुकं
काशीकल्पलताफलं भज मनः कात्यायनीकामुकम् ॥ ५९ ॥

कान्तया सह शुभालकान्तया मूर्तयेव कृपयैकमूर्तये ।
सर्वदाय नतिरस्तु सर्वदा नाकिनेत्रमणये पिनाकिने ॥ ६० ॥

सेवित्वा चिरमचलात्मजासनाथं
विश्वेशं विलसदरसंपदान्तरङ्गम् ।
धन्योऽयं तदनु शनैःशनैरयासी-
दावासं त्रिभुवनमातुरन्नदाञ्याः ॥ ६१ ॥

कृतावनतिरम्बायै सतामयतु(म)पश्चिमः ।
अपारकरुणामेनामुपातिष्ठत सूक्तिभिः ॥ ६२ ॥

दृष्टातिथिं कृतकलामनसौरभेयी
शृङ्गाग्रहारसुगनाभिमुखैरुदाराम् ।
सेवाकृतं मयि गृहं श्रियमावहन्ति
सौवानना पशुपतेरिह संनियच्छाम् ॥ ६३ ॥ (?)

दर्वीशरावौ कृतकङ्कणाभ्यां संबिभ्रती पाणिसरोरुहाभ्याम् ।
पट्टांशुकं पाटलमुद्वहन्ती काचित्पुरस्तात् [करुणा] ममास्ताम् ॥ ६४ ॥

त्वमन्नपूर्णापि कृशासि मध्ये श्यामासि संफुल्लजपाभिरामा ।
छन्दोवनस्थाप्यवनप्रसक्ता वन्दारुमन्दारलताप्यपर्णा ॥ ६५ ॥

निरस्तवेलानियमं विमुक्तचिरन्तनागन्तुजनव्यवस्थम् ।
व्यसेपवेध क्रमिभेदचिन्त(?)मगात्मजे नौमि तवान्नदानम् ॥ ६६ ॥
अपोभिरष्टादशभेदशालिरसैरिह त्वामतिरञ्जयित्रीम् ।
न स्तोतुमीष्टे नलिनासहो(नो)ऽपि वाच रसैर्वासयिता तवर्थैः ॥ ६७ ॥
आर्ये मुहु केवलमर्थमन्नै पुष्णासि वाच न पुन कदापि ।
भवत्स्वरूपप्रतिपादने किमत प्रयातीयमशक्तिमत्ताम् ॥ ६८ ॥
प्राचीनवाचापि पर दुरापा त्वामीडितु यत्त्वरते रसज्ञा ।
निदानमस्मिन्भवदीयदर्वीनिवेशदिव्यान्नरसाभिलाष ॥ ६९ ॥
न स्तौति क्रूसान्नमयादिपोषा·········· · ···· ।
सबिभ्रतः स्वीयशरीरमात्र जनस्य का वा जगति प्रशसा ॥ ७० ॥
त्वामोपधिप्रस्थपतेस्तनूजा प्राचीनभिक्षाकपरिप्लवाक्षीम् ।
अकिंचनप्रेसरमध्यगेया वय कथ विश्वसिमोऽन्नदात्रीम् ॥ ७१ ॥
न विद्यते पाकसमुद्यमस्ते नैकत्र ( वा ) भोक्तृजना मिलन्ति ।
जगत्त्रयीतृप्तिकर तथापि चित्रीयते देवि तवान्नदानम् ॥ ७२ ॥
केलीकृते श्रीरिव सारस वा वाणीव पाणौ मणिवल्लकीं वा ।
दधासि चेदम्ब विधूय दर्वीं कथ त्रिलोकी कुशल लभेत ॥ ७३ ॥
वैषम्यशाली वलते जनेषु पदाब्जयो शारदयो प्रसाद ।
हिताशनैरेधयितु त्रिलोकी दधे तु (?) जागर्तु तवाम्बिकाया ॥ ७४ ॥
अवस्थिता भर्तुरमुक्तपार्श्वमार्तातिथीनामवन च भोज्यै ।
भवानि कर्तुं यदतिप्रवीणा गुण किलाय कुलपालिकानाम् ॥ ७५ ॥
आर्तिस्पृशामम्ब सुखासु(नु)भूते(ति)रापादि नानाखिलदेहभाजाम् ।
आहारदाने नियमस्तवायमर्थे परेषामनघाय तचे ॥ ७६ ॥
अशेषलोकावनमम्ब भोज्यै कर्तव्यमित्येव करोषि बुद्ध्या ।
तामालिदो (?) दासजनाभिपोषमावश्यकं प्राहुरधीश्वराणाम् ॥ ७७ ॥
सार्धं प्रिय सर्वमितीरयन्ती मृषेतरा वागपि सा मृषैव ।
आदिश्य किं पुष्यसि विश्वमन्ते समम्ब सप्राप्तसमस्तकामा ॥ ७८ ॥

कार्यो न किं कान्तपदाब्जसेवा नास्ति श्रमः कापि न किंकरीति ।
अङ्गानि धन्ये सयमङ्कभाजां दर्वीमसंत्यज्य धृतां दधासि ॥ ७९ ॥
त्वमेव दर्वीदधतः क्षुधार्तान्पुष्णासि भूयस्यपि दासलोके ।
सपुत्ररक्षाविषये सवित्री परत्र न प्रत्ययमादधाति ॥ ८० ॥
संतर्पयस्यम्ब सदान्नदानैरागन्तुलोकानपि पार(ल)यन्ती ।
आद्यस्य भिक्षोरनपायि नित्यं जानानि धिनार्तिजनमयासान् (?) ॥ ८१ ॥
भैक्ष्याय मातः प्रतिवीथि कारयामितस्ततो यान्तमतिक्षुधा माम् ।
आहूय वत्सेत्यनुवेलमन्नैर्विधेहि सौहित्यविशेषभाजम् ॥ ८२ ॥
दर्व्या प्रपञ्चे तव रक्ष्यमाणे विहाय चिन्तां रमते वृषाङ्कः ।
सधर्मिणी चेच्चरितानुरोधात्कुटुम्बिनः शर्म कुतस्ततोऽपि ॥ ८३ ॥
प्रपञ्चमन्नैः परिपोषयन्त्यामार्ये भवत्यामसृतांशुमौलेः ।
भिक्षाटनं भ्रामवजृम्भितेषु क्रीडाविभेदेषु गणेयमासीत् ॥ ८४ ॥
भ्रातु(मात)र्भवमार्थनदैवमिन्दोरग्लान्तक्षुसाश्रयणस्य कार्श्यम् ।
क्षेप्तुं भिवोभिक्षुकृतां च मातः क्षमेतरा त्वं कथमन्नपूर्णा ॥ ८५ ॥ (?)
अज्ञातमन्यैरमितान्नदानादैश्वर्यमैशं भवती न्यनः (व्यनक्ति) ।
मकाशमावं प्रमदामुखेन प्रयाति गुप्तोऽसि(पि)भृशं किलार्थः ॥ ८६ ॥
आस्तां नि········श्मशानं वस्तां त्वचं वा विभु(वपु)रस्य भूतिम् ।
कथं विधत्तामखिलं किलेदं सत्यन्नपूर्णे तव संविधाने ॥ ८७ ॥
ईर्ष्या किमाशाय गिरं वितीर्य गणे सुराणां···········तौघे । (?)
दिवानिशं देवि सुधान्नवृष्ट्या धिनोषि यत्त्रीण्यपि विष्टपानि ॥ ८८ ॥
जगन्मुखारोपणकृत्कपालं पतिर्दधावित्ययशः प्रमार्ष्टुम् ।
किमम्ब गृह्णासि करेण दर्वीं प्रतिक्षणं विश्वजनप्रतीक्ष्याम् ॥ ८९ ॥
त्रैलोक्यकुक्षिंभरिणा हरेण ताभ्यां च लम्बोदरषण्मुखाभ्याम् ।
अधिष्ठिते धाम्नि तवान्नभूमा जयत्ययं देवि जनार्तिहारी ॥ ९० ॥
सवास्पदं दातुमरुद्धवीना(?)माक्रान्तमुद्यानममर्त्यसालैः ।
वेश्माभिचिन्तामणिभिः प्रणीतं विश्राणनेनास्य किमम्ब भारः ॥ ९१ ॥

सर्वातिथि( थीं )स्त्वं खलु सर्वकालं निश्चिन्तमन्नानि दिशस्यपर्णे ।
न तत्र हेत्वन्तरमन्तरेण न्यग्रोधमालोमजपं प्रियं ते ॥ ९२ ॥
मातर्विशालाक्षि महार्हचेलस्रगङ्गरागप्रभृतौ स्वभूतिम् ।
सदोपयुङ्क्ते यदि शैलधन्वा कथं तदा ते घटतेऽन्नदानम् ॥ ९३ ॥
त्रैलोक्यसंतर्पणदानजन्मा दूरे गिरां त्वत्सुकृतातिरेकः ।
आस्ते कपर्दी यदनुग्रहेण वेधोमुखामर्त्यविरामसाक्षी ॥ ९४ ॥
स्रष्टुं प्रतिष्ठापयितुं जगन्ति हर्तुं तिरस्कर्तुमनुग्रहीतुम् ।
पितामहाद्याः प्रभवन्ति यत्ते सवित्रि दर्वीविभवः स एषः ॥ ९५ ॥
समाप्य नाथे सवनं द्वितीयमारब्धदीनागमनप्रतीक्षे ।
नवीनमन्नं नगजे भवत्या मदीयतां प्राघुणिकाय मह्यम् ॥ ९६ ॥
अपास्य षाण्मातुरमर्धपीतवक्षोजमभ्यागतवत्सले त्वम् ।
आगत्य वेगादमृतौदनं मे पिनाकपाणिप्रमदे प्रदेहि ॥ ९७ ॥
आनर्घमाणीक्यशरापमध्यादार्तेन (?) कार्तस्वरदर्विकायाम् ।
भैक्षेण दाक्षायणि पावनेन मनोरथं पूरय मामकीनम् ॥ ९८ ॥
संतन्वतेव स्वमणीकलम्पटे····पूपदेशात्क्वशतानुयोगात् । (?)
हस्तेन कात्यायनि हन्त कामं विश्राणय श्रान्तिविनोदनं मे ॥ ९९ ॥
हैयङ्गवीनस्तुतिशालिहस्तनखंपचं नव्यसितानमार्घम् ।
करस्फुरत्काञ्चनभाजनात्ते भवानि दिव्यं दिश पायसान्नम् ॥ १०० ॥
दृशोऽनुकम्पारसदीर्घिकाया नीलारविन्दैरिव निर्जहानैः (?) ।
अपाङ्गपातैरनुगृह्य मातरामोदयान्नैरिममन्नपूर्णे ॥ १०१ ॥
श्रान्तः क्षुधा सायमहर्मुखे वात्यन्नं दिश द्वारमुपैमि यावत् ।
शिञ्जानमञ्जीरपदं समेत्य प्रयच्छ मे पार्वति तावदन्नम् ॥ १०२ ॥
आविष्कृतप्रार्थनमभ्यकाले वीतक्षुधं मां गिरिजे विधेहि ।
प्रतीक्षते किं पृथुको जनन्याः स्तन्यामृतासारसमृद्धिवेलाम् ॥ १०३ ॥
अवश्यकर्तव्यतयानुवेलं महान्ति कर्माणि सदा दिशन्ति ।
पर्याप्तमस्य प्रतिपादयान्नं कर्तुं न किंचित्क्षमते बुभुक्षुः ॥ १०४ ॥

नित्यान्नदे मे निजमूर्तिभारमचिन्तयित्वाशनमर्पयेथाः ।
आदाय दर्वीं क्वचिदासिकायै जगज्जनन्याः समयः कुतस्ते ॥ १०५ ॥
दूरे क्षिपन्ती गुणदोषचिन्तामिष्टाशनैरेधय मामनव्यम् ।
निजे तनूजे किल निर्गुणेऽपि व्यनक्ति वात्सल्यभरं सवित्री ॥ १०६ ॥
अन्नार्थिनं मां यदि चेद्बुनोपि कृपापराची गणये किमन्यत् ।
........................................................ ॥ १०७ ॥

दर्वीपायसभाजने कलयता युग्मेन हस्ताब्जयो-
रप्रत्यूहविभावितत्रिजगतीभिक्षाकनेत्रोत्सवा ।
वाचालाभरणं महानसगृहादन्नोपहारेच्छया
निर्यान्ती परदेवता मम मुहुश्चिन्तापथं गाहताम् ॥ १०८ ॥
स्तन्यास्वादकृते निरुध्य पुरतः संतन्वते प्रार्थनां
सेनान्ये सति पूर्वकायमसकृत् स्मित्वा दिशन्ती स्तनौ ।
अस्तखेदपयःकणां(णा)प्रणयिनो हस्तेन वक्त्रादुमां(मा)
मृष्टान्नार्पणमर्थिनां विदधती(ती)मेधा महा(या)लभ्य(भ्य)ते१०९
स्मेरस्मेरमलीकचित्रकपरामर्शी श्रमाम्भोलवं
दिव्यास्ते व्यजनानिलाद्धरचलोत्तंसं दधाना मुखम् (?) ।
चेतो मे न जहातु सा भगवती कृत्वातिथेयीं कृपा-
माशी[राशि]परा गिरीशवसतिं मत्यान्नजन्ती जनैः ॥ ११० ॥
दृढभक्तितरङ्गितक्रमामथ मदयन्नधिकालि देवताः ।
अविगाढपरं मनोगिरामधितानन्दममन्दमास्तिकः ॥ १११ ॥
आर्यश्चकसरोवगाहनियमैरश्रान्तयात्राक्रमै-
रन्नार्कं द्विजनौहितीविरचनैरावश्यकैरध्वरैः ।
विद्याव्याकरणैश्च शिष्यसदसे विश्वेशमाराधयन्
वाघूलान्वयमौलिरावसदसौ वाराणसीमृद्धिमान् ॥ ११२ ॥
प्रालेयाद्रिसुतासहायभजनप्रेमानुबन्धस्पृशे
विद्याशीलविनीत.........पो विश्राणनासन्निने ।

क्लैणपराङ्मुखाय ""करुणामूर्ति""संचिश्रते
मूर्ध्ना संनतिमग्रजाय महते मोदान्मुहुः कुर्महे ॥ ११३ ॥

इति श्रीवाधूलकुलजलधिकौस्तुभस्यातिरात्रयाजिन. साहित्यगुरो. घनकाठपाठ-
विरदाङ्कस्य वेङ्कटेशसुमतिसहधर्मिणीमण्यनन्तम्मागर्भशुक्तिमुक्तामणे.
समरपुङ्गवदीक्षितस्य कृतौ चम्पूकाव्ये यात्राप्रबन्धे
परिपूर्तिशोभितविलासो नाम नवम आश्वासः ॥

वीतस्पृहाय विरजस्तमसे समस्त-
शास्त्र[श्रुति]स्मृतिविदे समदर्शनाय ।
सिद्धाशिषे भगवदङ्घ्रिसमस्तभक्ति-
सान्द्रप्रसन्नमनसे सदसे नमोऽस्तु ॥

समाप्तोऽयं ग्रन्थः ।

